ततो नृपस्तस्य सुतस्य नाम सर्वार्थसिद्धोऽयमिति प्रचक्रे ॥१७॥
देवी तु माया विबुधर्षिकल्पं दृष्ट्वा विशालं तनयप्रभावं ।
जातं प्रहर्षं न शशाक सोढुं ततोऽविनाशाय दिवं जगाम ॥१८॥
ततः कुमारं सुरगर्भकल्पं स्नेहेन भावेन च निर्विशेषं ।
मातृष्वसा मातृसमप्रभावा संवर्धयामात्मजवद्बभूव ॥१९॥
ततः स बालार्क इवोदयस्थः समीरितो वह्निरिवानिलेन ।
क्रमेण सम्यग्ववृधे कुमारस्ताराधिपः पक्ष इवातमस्के ॥२०॥
ततो महार्हाणि च चन्दनानि रत्नावलीश्चौषधिभिः सगर्भाः ।
मृगप्रयुक्तान्रथकांश्च [1]हैमानाचक्रिरेऽस्मै[2] सुहृदालयेभ्यः ॥२१॥
वयोऽनुरूपाणि[3] च भूषणानि हिरण्मया हस्तिमृगाश्वकाश्च[4] ।
रथाश्च गावो वसनप्रयुक्ता गंत्रीश्च [5]चामीकररूप्यचित्राः ॥२२॥
एवं स तैस्तैर्विषयोपचारैर्वयोऽनुरूपैरुपचर्यमाणः ।
बालोऽप्यबालप्रतिमो बभूव धृत्या च शौचेन धिया श्रिया
च ॥२३॥
वयश्च कौमारमतीत्य मध्यं [6]संप्राप्य बालः स हि राजसूनुः ।
[7]अल्पैरहोभिर्बहुवर्षगम्या जग्राह विद्याः स्वकुलानुरूपाः ॥२४॥
नैःश्रेयसं तस्य तु भव्यमर्थं श्रुत्वा पुरस्तादसितान्महर्षेः ।
कामेषु संगं जनयांबभूव [8]वृद्धिर्भवच्छाक्यकुलस्य राज्ञः ॥२५॥
कुलात्ततोऽस्मै स्थिरशीलसंयुतात्साध्वीं वपुर्ह्रीविनयोपपन्नां ।

[1] हैमान् C  [2] सौ D P  [3] ॰रूपानि C P.  [4] ॰मृगाश्च कोकाः P.
[5] Ex conj. चासीद्वर॰ MSS. not clear. The गंत्रीः of C is written तत्रीः in D P.
[6] D P om. rest of line  [7] अन्यै॰ P.  [8] Rest of line only in C and uncertain

यशोधरां[1] नाम यशोविशालां[2] तुल्याभिधानां श्रियमाजुहाव॥२६॥
[3]अथापरं भूमिपतेः प्रियोऽयं[3] सनत्कुमारप्रतिमः कुमारः।
सार्धं तया शाक्यनरेंद्रवध्वा शच्या सहस्राक्ष इवाभिरेमे ॥२७॥
किंचिन्मनःक्षोभकरं प्रतीपं कथंच पश्येदिति सोऽनुचिंत्य।
वासं नृपो ह्यादिशति स्म तस्मै हर्म्योदरेष्वेव न भूप्रचारं ॥२८॥
ततः शरत्तोयदपांडरेषु भूमौ विमानेष्विव रंजितेषु।
हर्म्येषु सर्वर्तुसुखाश्रयेषु स्त्रीणामुदारैर्विजहार तूर्यैः ॥२९॥
कलैर्हि चामीकरबद्धकक्षैर्नारीकराग्राभिहतैर्मृदंगैः।
वराप्सरोनृत्यसमैश्च नृत्यैः कैलासवत्[4] तद्भवनं रराज ॥३०॥
वाग्भिः कलाभिर्ललितैश्च [5]हारैर्मदैः सखेलैर्मधुरैश्च हासैः।
तं तत्र नार्यो [6]रमयांबभूवुर्भ्रूवंचितैरर्धनिरीक्षितैश्च ॥३१॥
ततश्च कामाश्रयपंडिताभिः स्त्रीभिर्गृहीतो रतिकर्कशाभिः।
विमानपृष्ठान्न महीं जगाम विमानपृष्ठादिव पुण्यकर्मा ॥३२॥
नृपस्तु तस्यैव [7]विवृद्धिहेतोस्तद्भाविनार्थेन च चोद्यमानः।
[9]शमेऽभिरेमे विरराम पापाद्भेजे दमं संविबभाज साधून् ॥३३॥
नाधीरवत् कामसुखे ससंजे न संररंजे विषमं जनन्यां।
धृत्येंद्रियाश्वांश्चपलान् विजिग्ये बंधूंश्च पौरांश्च गुणैर्जिगाय ॥३४॥
नाध्यैष्ट दुःखाय परस्य विद्यां ज्ञानं शिवं यत्तु तदध्यगीष्ट।
स्वाभ्यः प्रजाभ्यो हि यथा तथैव सर्वप्रजाभ्यः शिवमाशशंसे ॥३५॥

[1] यशोधरा C P [2] तामाभि° D P [3] In this half-line D P have only पूयापरेण and so C originally, but adds the line in margin. [4] कैलाशवत् C P, P omits 30, *ab* [5] Corrected in C to हावै. [6] रसया P [7] विष्टब्धि° P ? [8] तद्भाविता° P [9] समे C P

तं भासुरं चांगिरसाधिदेवं[1] यथावदानर्च तदायुषे सः ।
जुहाव हव्यान्यकृशे कृशानौ ददौ द्विजेभ्यः कृशनं च गाश्च ॥३६॥
सस्नौ शरीरं पवितुं मनश्च तीर्थांबुभिश्चैव गुणांबुभिश्च ।
वेदोपदिष्टं सममात्मजं च सोमं पपौ शांतिसुखं च हार्दं ॥३७॥
सांत्वं बभाषे न च नार्थवद्यज्जजल्प तत्त्वं न च विप्रियं यत् ।
सांत्वं ह्यतत्त्वं परुषं च तत्त्वं ह्रियाश[2]कन्नात्मन एव वक्तुं ॥३८॥
इष्टेष्वनिष्टेषु च कार्यवत्सु न रागदोषाश्रयतां प्रपेदे ।
शिवं सिषेवे[3]ऽव्यवहारलब्धं यज्ञं हि मेने न तथा यथावत् ॥३९॥
आशावते चाभिगताय सद्यो देयांबुभिस्तर्षमचेच्छिदिष्ट ।
युद्धादृते वृत्तपरश्वधेन द्विद्दर्पमुद्वृत्तमबेभिदिष्ट ॥४०॥
एकं विनिन्ये स जुगोप सप्त सप्तैव तत्याज ररक्ष पञ्च ।
प्राप त्रिवर्गं बुबुधे त्रिवर्गं जज्ञे द्विवर्गं प्रजहौ द्विवर्गं ॥४१॥
कृतागसोऽपि प्रतिपाद्य वध्यान्नाजीघनन्नापि रुषा ददर्श ।
बबंध सांत्वेन फलेन चैतांस्त्यागोऽपि तेषां ह्यनपायदृष्टः ॥४२॥
आर्षाण्यचारीत्परमव्रतानि वैराण्यहा[4]सीच्चिरसंभृतानि ।
यशांसि चापद्गुणगंधवन्ति रजांस्यहासीन्मलिनीकराणि ॥४३॥
न चाजिहीर्षीद्बलिमप्रवृत्तं न चाचिकीर्षीत्परवस्त्वभिध्यां ।
न चाविवक्षीद्वि[5]षतामधर्मं न चादिधक्षीद्धृदयेन मन्युं ॥४४॥
तस्मिंस्तथा भूमिपतौ प्रवृत्ते भृत्याश्च पौराश्च तथैव चेरुः ।

[1] °द्दैवं C, चापि न साधिद्दैवं P. [2] °सकन्न° C P [3] The MSS. have शिषिवे and no ऽ For the Tibetan, see note in Appendix [4] अहासीत् C (? aor of हन् ?) [5] Ex conj चाविधचीद् C P (P not clear)

[1]शमात्मके चेतसि विप्रसन्ने प्रयुक्तयोगस्य यथेंद्रियाणि ॥४५॥
काले ततश्चारुपयोधरायां यशोधरायां सुयशोधरायां ।
[2]शौद्धोदनेराहुसपत्नवक्त्रो जज्ञे सुतो राहुल एव नाम्ना ॥४६॥
अथेष्टपुत्रः परमप्रतीतः कुलस्य वृद्धिं प्रति भूमिपालः ।
यथैव पुत्रप्रसवे ननंद तथैव पौत्रप्रसवे ननंद ॥४७॥
पौत्रस्य मे पुत्रगतो ममैव[3] स्नेहः कथं स्यादिति जातहर्षः ।
काले स तं तं विधिमाललंबे पुत्रप्रियः स्वर्गमिवारुरुक्षन् ॥४८॥
स्थित्वा पथि प्राथमकल्पिकानां राजर्षभाणां[4] यशसान्वितानां ।
शुक्लान्यमुक्त्वापि तपांस्यतप्त[5] यज्ञे च[6] हिंसारहितैरयष्ट ॥४९॥
[7]अजाज्वलिष्टाथ स पुण्यकर्मा नृपश्रिया चैव तपःश्रिया च ।
कुलेन वृत्तेन धिया च दीप्तस्तेजः सहस्रांशुरिवोत्सिसृक्षुः ॥५०॥
स्वायंभुवं चार्चिकमर्चयित्वा जजाप पुत्रस्थितये स्थितश्रीः ।
चकार कर्माणि च दुष्कराणि प्रजाः सिसृक्षुः क इवादिकाले ॥५१॥
तत्याज शस्त्रं विममर्श[8] शास्त्रं शमं सिषेवे[9] नियमं विषेहे ।
वशीव कंचिद्विषयं न भेजे पितेव सर्वान्विषयान् ददर्श ॥५२॥
बभार राज्यं स हि पुत्रहेतोः पुत्रं कुलार्थं यशसे कुलं तु ।
स्वर्गाय शब्दं दिवमात्महेतोर्धर्मार्थमात्मस्थितिमाचकांक्ष ॥५३॥
एवं स धर्मं विविधं चकार सद्भिर्निपातं[10] श्रुतितश्च सिद्धं ।
दृष्ट्वा कथं पुत्रमुखं सुतो मे वनं न यायादिति नाथमानः ॥५४॥

[1] समात्मके C P.  [2] शौद्धोदनो  [3] C P  [4] ०भाना C P
[5] ०तप्त P  [6] Query यज्ञैश्च ?  [7] अजज्व० C P  [8] विममर्ष C P
[9] समं शिषेवे C P  [10] नियातं C P

रिरक्षिषंतः श्रियमात्मसंस्था[1] रक्षंति पुत्रान् भुवि भूमिपालाः।
पुत्रं नरेंद्रः स तु धर्मकामो ररक्ष धर्माद्विषयेष्वमुंचत् ॥५५॥
वनमनुपमसत्त्वा बोधिसत्त्वास्तु सर्वे विषयसुखरसज्ञा[2] जग्मुरुत्पन्न-
पुत्राः।
अत उपचितकर्मा रूढमूलेऽपि हेतौ स रतिमुपसिषेवे[3] बोधि-
मापन्नयावत् ॥५६॥

इति श्रीबुद्धचरिते महाकाव्येऽन्तःपुरविहारो नाम द्वितीयः
सर्गः ॥२॥

[1] Should we read आत्मसंस्थां?  [2] ०रसंज्ञा C  [3] ०शिषिवे C P

# BOOK III.

ततः कदाचिन्मृदुशाद्वलानि पुंस्कोकिलोन्नादितपादपानि ।
शुश्राव पद्माकरमंडितानि शीते निबद्धानि स काननानि ॥१॥
श्रुत्वा ततः स्त्रीजनवल्लभानां मनोज्ञभावं पुरकाननानां ।
वहिःप्रयाणाय चकार बुद्धिमंतर्गृहे नाग इवावरुद्धः ॥२॥
ततो नृपस्तस्य निशम्य भावं पुत्राभिधानस्य मनोरथस्य ।
स्नेहस्य लक्ष्म्या वयसश्च योग्यामाज्ञापयामास विहारयात्रां ॥३॥
निवर्तयामास च राजमार्गे संपातमार्तस्य पृथग्जनस्य ।
मा भूत्कुमारः सुकुमारचित्तः[1] संविग्नचेता इव मन्यमानः ॥४॥
प्रत्यंगहीनान् विकलेंद्रियांश्च जीर्णातुरादीन् कृपणांश्च भिक्षून् ।
ततः समुत्सार्य परेण साम्ना शोभां परा राजपथस्य चक्रुः ॥५॥
ततः कृते श्रीमति राजमार्गे श्रीमान् विनीतानुचरः कुमारः ।
प्रासादपृष्ठादवतीर्य काले कृताभ्यनुज्ञो नृपमभ्यगच्छत् ॥६॥
अथो नरेंद्रः सुतमागताश्रुः शिरस्युपाघ्राय चिरं निरीक्ष्य ।
गच्छेति चाज्ञापयति स्म वाचा स्नेहान्न चैनं मनसा मुमोच ॥७॥
ततः स जांबूनद[2]भांडभृद्भिर्युक्तं चतुर्भिर्निभृतैस्तुरंगैः ।
अक्लीववि[3]द्युच्छुचिरश्मिधारं हिरण्मयं स्यंदनमारुरोह ॥८॥
ततः प्रकीर्णोज्ज्वलपुष्पजालं [4]विषक्त[illegible]माल्यं प्रचलत्पताकं ।

[1] So D °गर्भः C P, but corrected in C in marg [2] °भास C see m, 1
[3] °विध्यच्छुचि° P [4] विसक्त° C P

D 2

मार्गं प्रपेदे सदृशानुयात्रश्चंद्रः सनक्षत्र इवान्तरीक्षं ॥९॥
कौतूहलात्स्फीततरैश्च नेत्रैर्नीलोत्पलार्भैरिव[1] कीर्यमाणः[2] ।
शनैः शनै राजपथं जगाहे पौरैः समंतादभिवीक्ष्यमाणः[2] ॥१०॥
तं तुष्टुवुः सौम्यगुणेन केचिद्ववंदिरे दीप्ततया तथान्ये ।
सौमुख्यतस्तु श्रियमस्य केचिद्वैपुल्य[3]माशंसिषुरायुषश्च ॥११॥
निःसृत्य कुब्जाश्च महाकुलेभ्यो व्यूहाश्च कैरातकवामनानां ।
नार्यः कृशेभ्यश्च निवेशनेभ्यो देवानुयानध्वजवत् प्रणेमुः ॥१२॥
ततः कुमारः खलु गच्छतीति श्रुत्वा स्त्रियः प्रेष्यजनात्प्रवृत्तिं ।
दिदृक्षया हर्म्यतलानि जग्मुर्जनेन मान्येन कृताभ्यनुज्ञाः ॥१३॥
ताः [4]स्रस्तकांचीगुणविघ्नताश्च सुप्तप्रबुद्धाकुललोचनाश्च ।
वृत्तांतविन्यस्तविभूषणाश्च कौतूहलेनापि भृताः परीयुः ॥१४॥
प्रासादसोपानतलप्रणादैः कांचीरवैर्नूपुरनिस्वनैश्च ।
विभ्रामयंत्यो गृहपक्षिसंघानन्योन्यवेगाच्च समाक्षिपंत्यः ॥१५॥
कासांचिदासां तु वरांगनानां जातत्वराणामपि सोत्सुकानां ।
गतिं गुरुत्वाज्जगृहुर्विशालाः श्रोणीरथाः पीनपयोधराश्च ॥१६॥
शीघ्रं समर्थापि तु गंतुमन्या गतिं निजग्राह ययौ न तूर्णं ।
ह्रिया प्रगल्भानि निगूहमाना रहः प्रयुक्तानि विभूषणानि ॥१७॥
परस्परोत्पीडनपिंडितानां संमर्दसंक्षोभितकुंडलानां ।
तासां तदा सस्वनभूषणानां वातायनेष्वप्रशमो[5] बभूव ॥१८॥
वातायनेभ्यस्तु विनिःसृतानि परस्परोपासितकुंडलानि ।

[1] °लार्द्धैरिव C [2] °मानः C P [3] विपुल्यं C. [4] भ्रष्ट° C
[5] Ex conj. °प्रसमो C °प्रशमो P C

स्त्रीणां विरेजुर्मुखपंकजानि सक्तानि हर्म्येष्विव पंकजानि ॥१९॥
ततो विमानैर्युवतीकलापैः[1] कौतूहलोद्घाटितवातयानैः[2] ।
श्रीमत्समंतान्नगरं बभासे वियद्विमानैरिव साप्सरोभिः ॥२०॥
वातायनानामविशालभावादन्योन्यगंडार्पितकुंडलानि[3] ।
मुखानि रेजुः प्रमदोत्तमानां बद्धाः कलापा इव पंकजानां ॥२१॥
तस्मिन् कुमारं पथि वीक्षमाणाः[4] स्त्रियो बभुर्गामिव गंतुकामाः ।
ऊर्ध्वोन्मुखाश्चैनमुदीक्षमाणा[4] नरा बभुर्द्यामिव गंतुकामाः ॥२२॥
दृष्ट्वा च तं राजसुतं स्त्रियस्ता जाज्वल्यमानं वपुषा श्रिया च ।
धन्यास्य भार्येति शनैरवोचञ्शुद्धैर्मनोभिः खलु[5] नान्यभावात् ॥२३॥
अयं किल व्यायतपीनबाहू रूपेण साक्षादिव पुष्पकेतुः ।
त्यक्त्वा श्रियं धर्ममुपेष्यतीति तस्मिन् हिता गौरवमेव चक्रुः ॥२४॥
कीर्णं तथा राजपथं कुमारः पौरैर्विनीतैः शुचिधीरवेषैः ।
तत्पूर्वमालोक्य जहर्ष किंचिन्मेने पुनर्भावमिवात्मनश्च ॥२५॥
पुरं तु तत्स्वर्गमिव प्रहृष्टं शुद्धाधिवासाः समवेक्ष्य देवाः ।
जीर्णं नरं निर्ममिरे प्रयातुं संचोदनार्थं क्षितिपात्मजस्य ॥२६॥
ततः कुमारो जरयाभिभूतं दृष्ट्वा नरेभ्यः पृथगाकृतिं तं ।
उवाच संग्राहकमागतास्थस्तत्रैव[6] निष्कम्पनिविष्टदृष्टिः ॥२७॥
क एष भोः[7] सूत नरोऽभ्युपेतः केशैः सितैर्यष्टिविषक्तहस्तः[8] ।
भ्रूसंवृताक्षः शिथिलानतांगः किं विक्रियैषा प्रकृतिर्यदृच्छा ॥२८॥
इत्येवमुक्तः स रथप्रणेता निवेदयामास नृपात्मजाय ।

[1] °करासैः C  [2] °द्वातित° P  [3] °कुडलानां C.  [4] °च्यमानाः CP.  [5] मनोभिर्खलु CP.  [6] आगताः स्थ° P.  [7] भो CP  [8] °विशक्त° C  विसक्त° P

संरक्ष्यमप्यर्थमदोषदर्शी तैरेव देवैः कृतबुद्धिमोहः ॥२९॥
रूपस्य हन्त्री व्यसनं बलस्य शोकस्य योनिर्निधनं रतीनां।
नाशः स्मृतीनां रिपुरिंद्रियाणामेषा जरा नाम ययैष भग्नः ॥३०॥
पीतं ह्यनेनापि पयः शिशुत्वे कालेन भूयः परिमृष्टमुर्व्यां।
क्रमेण भूत्वा च युवा वपुष्मान् क्रमेण तेनैव जरामुपेतः ॥३१॥
इत्येवमुक्ते चलितः स किंचिद्राजात्मजः सूतमिदं बभाषे।
किमेष दोषो भविता ममापीत्यस्मै ततः सारथिरभ्युवाच ॥३२॥
आयुष्मतोऽप्येष वयःप्रकर्षान्निःसंशयं कालवशेन भावी।
एवं जरां रूपविनाशयित्रीं जानाति चैवेच्छति चैष लोकः ॥३३॥
ततः स पूर्वाशयशुद्धबुद्धिर्विस्तीर्णकल्पाचितपुण्यकर्मा।
श्रुत्वा जरां संविविजे महात्मा महाशनेर्घोषमिवांतिके गौः ॥३४॥
[1]निःश्वस्य दीर्घं स शिरः प्रकंप्य तस्मिंश्च जीर्णे विनिवेश्य चक्षुः।
तां चैव दृष्ट्वा जनतां सहर्षां वाक्यं स संविग्नमिदं जगाद ॥३५॥
एवं जरा हंति च निर्विशेषं स्मृतिं च रूपं च पराक्रमं च।
न चैव संवेगमुपैति लोकः प्रत्यक्षतोऽपीदृशमीक्षमाणः[2] ॥३६॥
एवं गते सूत निवर्तयाश्वान् शीघ्रं गृहाण्येव भवान्प्रयातु।
उद्यानभूमौ हि कुतो रतिर्मे जराभवे चेतसि वर्तमाने ॥३७॥
अथाज्ञया भर्तृसुतस्य तस्य निवर्तयामास रथं नियंता।
ततः कुमारो भवनं तदेव चिंतावशः शून्यमिव प्रपेदे ॥३८॥
यदा तु तत्रैव न शर्म लेभे जरा जरेति प्रपरीक्षमाणः[3]।
ततो नरेंद्रानुमतः स भूयः क्रमेण तेनैव वहिर्जगाम ॥३९॥

[1] निश्वस्य C  [2] ईक्ष्यमानः C P  [3] प्रपरीक्ष्यमाणः P C (°नः C)

ग्रथापरं व्याधिपरीतदेहं त एव देवाः ससृजुर्मनुष्यं ।
दृष्ट्वा च तं सारथिमाबभाषे शौड्वोदनिस्तद्गतदृष्टिरेव ॥४०॥
स्थूलोदरः श्वासचलच्छरीरः स्रस्तांस[1]बाहुः कृशपांडुगात्रः ।
ग्रंबेति वाचं करुणं ब्रुवाणः परं समाश्लिष्य[2] नरः क एषः ॥४१॥
ततोऽब्रवीत्सारथिरस्य सौम्य धातुप्रकोपप्रभवः प्रवृद्धः ।
रोगाभिधानः सुमहाननर्थः शक्रोऽपि येनैष कृतोऽस्वतंत्रः ॥४२॥
इत्यूचिवान् राजसुतः स भूयस्तं सानुकंपो नरमीक्षमाणः[3] ।
ग्रस्यैव जातः पृथगेष दोषः सामान्यतो रोगभयं प्रजानां ॥४३॥
ततो बभाषे स रथप्रणेता कुमार साधारण एष दोषः ।
एवं हि रोगैः परिपीड्यमानो रुजातुरो[4] हर्षमुपैति लोकः ॥४४॥
इति श्रुतार्थः स विषसचेताः प्रावेपतांबूर्मिगतः शशीव ।
इदं च वाक्यं करुणायमानः प्रोवाच किंचिन्मृदुना स्वरेण ॥४५॥
इदं च रोगव्यसनं प्रजानां पश्यंश्च विश्रंभमुपैति लोकः ।
विस्तीर्णविज्ञानमहो नराणां हसंति ये रोगभयैरमुक्ताः ॥४६॥
निवर्त्यतां सूत वहिःप्रयाणान्नरेंद्रसद्मैव रथः प्रयातु ।
श्रुत्वा च मे रोगभयं रतिभ्यः प्रत्याहतं संकुचतीव चेतः ॥४७॥
ततो निवृत्तः स निवृत्तहर्षः प्रध्यानयुक्तः प्रविवेश सद्म ।
[5]तं द्विस्तथा प्रेक्ष्य च संनिवृत्तं [6]पुर्यागमं भूमिपतिश्चकार ॥४८॥

[1] स्रस्ताश्च° P, ग्रस्ताश्च° C [2] समास्रुत्य C [3] ईक्ष्यमानः C, ईक्ष्यमाणः P
[4] So D P रुजातुरो C Should we read रु आतुरो or रु गातरे? The Tibetan favours the latter [5] तद्विस्तथाः D, तद्विस्तरः C but corrected and °था written in the margin, तद्विस्तर P [6] पूर्या° C P

श्रुत्वा निमित्तं[1] तु निवर्तनस्य संत्यक्तमात्मानमनेन मेने ।
मार्गस्य शौचाधिकृताय चैव चुक्रोश रुष्टोऽपि च नोग्रदंडः ॥४९॥
भूयश्च तस्मै विदधे सुताय विशेषयुक्तं विषयप्रकारं ।
चलेंद्रियत्वादपि नापि शक्तो[2] नास्मान्विजह्यादिति नाथमा-
नः ॥५०॥
यदा च शब्दादिभिरिंद्रियार्थैरंतःपुरे [3]नैव सुतोऽस्य रेमे ।
ततो वहिर्व्यादिशति स्म यात्रां रसान्तरं स्यादिति मन्यमानः[4]॥५१॥
स्नेहाच्च भावं तनयस्य बुद्ध्वा संवेगदोषानविचिंत्य कांश्चित् ।
योग्याः समाज्ञापयति स्म तत्र कलास्वभिज्ञा इति वारमुख्याः॥५२॥
ततो विशेषेण नरेंद्रमार्गे स्वलंकृते चैव परीक्षिते च ।
व्यत्यास्य सूतं च रथं च राजा प्रस्थापयामास वहिः कुमारं ॥५३॥
ततस्तथा गच्छति राजपुत्रे तैरेव देवैर्विहितो गतासुः ।
तं चैव मार्गे मृतमुह्यमानं सूतः कुमारश्च ददर्श नान्यः ॥५४॥
अथाब्रवीद्राजसुतः स सूतं नरैश्चतुर्भिर्ह्रियते क एषः ।
दीनैर्मनुष्यैरनुगम्यमानो यो भूषितोऽश्वास्यवरुद्यते[5] च ॥५५॥
ततः स शुद्धात्मभिरेव देवैः शुद्धाधिवासैरभिभूतचेताः ।
अवाच्यमप्यर्थमिमं नियंता प्रव्याजहारार्थविदीश्वराय ॥५६॥
बुद्धींद्रियप्राणगुणैर्वियुक्तः सुप्तो विसंज्ञस्तृणकाष्ठभूतः[6] ।
[7]संवध्य संरक्ष्य च यत्नवद्भिः प्रियाप्रियैस्त्यज्यत एष कोऽपि ॥५७॥

[1] निवित्त P [2] Query अपि नाम सक्तो ? [3] तस्य सुतस्य P
[4] Ex conj मान्यमानः C नाथमानः P [5] Ex conj भूषितोश्वाप्यवरुद्यते C
भूषितस्चावरुद्यते P [6] The स्तृ is not clear in the MSS [7] संवद्धा C

इति प्रणेतुः स निशम्य वाक्यं संचुक्षुभे किंचिदुवाच चैनं ।
किं केवलस्यैव जनस्य धर्मः [1]सर्वप्रजानामयमीदृशोऽंतः ॥५८॥
ततः प्रणेता वदति स्म तस्मै सर्वप्रजानामय[2]मंतकर्मा ।
हीनस्य मध्यस्य महात्मनो वा सर्वस्य लोके नियतो विनाशः ॥५९॥
ततः स धीरोऽपि नरेंद्रसूनुः श्रुत्वैव मृत्युं विषसाद सद्यः ।
[3]अंसेन संश्लिष्य च कूवराग्रं प्रोवाच निह्रादवता स्वरेण[4] ॥६०॥
इयं च निष्ठा नियतं प्रजानां प्रमाद्यति त्यक्तभयश्च लोकः ।
मनांसि शंके कठिनानि[5] नृणां स्वस्थास्तथा ह्यध्वनि वर्तमा-
    नाः ॥६१॥
तस्माद्रथं सूत निवर्त्यतां नो विहारभूमौ[6] न हि देशकालः ।
जानन्विनाशं कथमार्त्तिकाले[7] सचेतनः स्यादिह हि प्रमत्तः ॥६२॥
इति ब्रुवाणेऽपि नराधिपात्मजे निवर्तयामास स नैव तं रथं ।
विशेषयुक्तं तु नरेंद्रशासनात्स पद्मखंडं वनमेव निर्ययौ ॥६३॥
ततः शिवं कुसुमितबालपादपं परिभ्रमत्प्रमुदितमत्तकोकिलं ।
विमानवत्सकमलचारुदीर्घिकं ददर्श तद्वनमिव नंदनं वनं ॥६४॥
वरांगनागण[8]कलिलं नृपात्मजस्ततो बलाद्वनमभिनीयते स्म तत् ।
वराप्सरोनृत्य[9]मलकाधिपालयं नवव्रतो मुनिरिव विघ्नका-
    तरः ॥६५॥

इति श्रीबुद्धचरिते महाकाव्ये संवेगोत्पत्तिर्नाम तृतीयः सर्गः ॥३॥

[1] सर्वत्रजाना P [2] इदं for अयं C अशेन C P [4] स्वरेण C
[5] कथिनानि C P [6] °भूमि C [7] Ex conj. the MSS read अत्ति कालः The Tibetan has nâm thag dus-su, 'at the time of oppression (as by misfortune)
[8] वरागणा C P [9] °नृत्य C P Should we read °नृति or °वृत ?

# BOOK IV

ततस्तस्मात् पुरोद्यानात् कौतूहलचलेक्षणाः ।
प्रत्युज्जग्मुर्नृपसुतं प्राप्तं वरमिव [1]स्त्रियः ॥१॥
अभिगम्य च तास्तस्मै विस्मयोत्फुल्ललोचनाः ।
चक्रिरे समुदाचारं पद्मकोशनिभैः करैः ॥२॥
तस्थुश्च परिवार्यैनं मन्मथाक्षिप्तचेतसः ।
निश्चलैः प्रीतिविकचैः पिबंत्य इव लोचनैः ॥३॥
तं हि ता मेनिरे नार्यः कामो विग्रहवानिति ।
शोभितं लक्षणैर्दीप्तैः सहजैर्भूषणैरिव ॥४॥
सौम्यत्वाच्चैव धैर्याच्च काश्चिदेनं प्रजज्ञिरे ।
अवतीर्णो महीं साक्षात् सुधांशुश्चंद्रमा इव[2] ॥५॥
तस्य ता वपुषाक्षिप्ता निग्रहीतुं[3] जजृंभिरे ।
अन्योन्यं दृष्टिभिर्गत्वा शनैश्च विनिशश्वसुः ॥६॥
एवं ता दृष्टिमात्रेण नार्यो ददृशुरेव तं ।
न व्याजहुर्न जहसुः प्रभावेणा[4]स्य यंत्रिताः ॥७॥
तास्तथा तु निरारंभा[5] दृष्ट्वा प्रणयविक्लवाः ।
पुरोहितसुतो धीमानुदायी वाक्यमब्रवीत् ॥८॥
सर्वाः सर्वकलाज्ञाः स्थ भावग्रहणपंडिताः ।

[1] त्रियः P.  [2] सुधांसुरिव यंद्रमाः P.  [3] निगृहीतुं C P  [4] ०ना० C P
[5] निरालंबा P

रूपचातुर्यसंपन्नाः स्वगुणैर्मुख्यतां गताः ॥९॥
शोभयत गुणैरेभिरपि तानुत्तरान् कुरून् ।
कुवेरस्यापि च क्रीडं प्रागेव वसुधामिमां ॥१०॥
शक्ताश्चालयितुं यूयं वीतरागानृषीनपि ।
अप्सरोभिश्च कलितान् ग्रहीतुं[1] विबुधानपि ॥११॥
भावज्ञानेन हावेन चातुर्याद्रूपसंपदा ।
स्त्रीणामेव च शक्ताः स्थ संरागे किं पुनर्नृणां ॥१२॥
तासामेवंविधानां वो [2]नियुक्तानां स्वगोचरे ।
इयमेवंविधा चेष्टा न तुष्टोऽस्म्यार्जवेन वः ॥१३॥
इदं नववधूनां वो ह्रीनिकुंचितचक्षुषां ।
सदृशं चेष्टितं हि स्यादपि [3]वा गोपयोषितां ॥१४॥
यद्यपि स्यादयं वीरः श्रीप्रभावान्महानिति ।
स्त्रीणामपि महत्तेज इति कार्योऽत्र निश्चयः ॥१५॥
पुरा हि काशिसुंदर्या वेशवध्वा महानृषिः ।
ताडितोऽभूत् [4]पदन्यासाहुर्धर्षो दैवतैरपि ॥१६॥
मंथालगौतमो[5] भिक्षुर्जंघया बालमुख्यया ।
पिप्रीषुश्च तदर्थार्थं[6] व्यसून् निरहरत् पुरा ॥१७॥
गौतमं दीर्घतपसं महर्षिं दीर्घजीविनं ।
योषित् संतोषयामास वर्णस्थानावरा सती ॥१८॥
ऋष्यशृंगं मुनिसुतं तथैव स्त्रीष्वपंडितं ।

[1] गृहीतुं C P [2] Ex conj वियुक्तानां C P [3] Ex conj रागोपि° C P The Tibetan has 'wives of cowherds' [4] पदाभ्यासादुर्धर्षो C [5] °गोतमो C
[6] Should we read तदर्थाय?

उपायैर्विविधैः शांता जग्राह च जहार च ॥१९॥
विश्वामित्रो महर्षिश्च विगाढो[1]ऽपि महत्तपाः ।
दशवर्षाण्यरण्यस्थो घृताच्याप्सरसा हृतः ॥२०॥
एवमादीनृषींस्तांस्ताननयन् विक्रियां[2] स्त्रियः ।
ललितं पूर्ववयसं किं पुनर्नृपतेः सुतम् ॥२१॥
तदेवं सति विश्रब्धं प्रयतध्वं तथा यथा ।
इयं नृपस्य वंशश्रीरितो न स्यात्पराङ्मुखी ॥२२॥
या हि काश्चिद्युवतयो हरंति सदृशं जनं ।
निकृष्टोत्कृष्टयोर्भावं या [3]गृह्णंति तु ताः स्त्रियः ॥२३॥
इत्युदायिवचः श्रुत्वा ता विद्धा इव योषितः ।
समारुरुहुरात्मानं कुमारग्रहणं प्रति ॥२४॥
ता भ्रूभिः प्रेक्षितैर्भा[4]वैर्हसितैर्ललितैर्गतैः ।
चक्रुराक्षेपिकाश्चेष्टा भीतभीता इवांगनाः ॥२५॥
राज्ञस्तु विनियोगेन कुमारस्य च मार्दवात् ।
[5]जह्रुः क्षिप्रमविश्रंभं मदेन मदनेन च ॥२६॥
अथ नारीजनवृतः कुमारो व्यचरद्वनं ।
[6]वासितायूथसहितः करीव हिमवद्वनं ॥२७॥
स तस्मिन् कानने रम्ये जज्वाल स्त्रीपुरःसरः ।
आक्रीड इव बभ्राजे[7] विवस्वानप्सरोवृतः ॥२८॥
मदेनावर्जिता नाम तं काश्चित्तत्र योषितः ।

[1] °धो P [2] Ex conj विक्रियान् C विक्रयान् P [3] गृह्णंति C [4] हावि° C
[5] जह्रुर्च्चिप्र C P [6] Ex conj वासित C, वासितं P [7] विभ्राजे C

कठिनैः पस्पृशुः पीनैः संघट्टैर्वल्गुभिः स्तनैः ॥२९॥
[1]स्रस्तांसकोमलालं[2]बमृदुबाहुलताबला ।
अनृतं स्खलितं काचित्कृत्वैनं सस्वजे बलात् ॥३०॥
काचित् ताम्राधरोष्ठेन मुखेनासवगंधिना ।
विनिशश्वास कर्णेऽस्य रहस्यं श्रूयतामिति ॥३१॥
काचिदाज्ञापयंतीव प्रोवाचार्द्रानुलेपना ।
इह भक्तिं कुरुष्वेति [3]हस्तं संश्लिष्य लिप्सया ॥३२॥
मुहुर्मुहुर्मदव्याजस्रस्तनीलांशुकापरा ।
आलक्ष्यरसना रेजे स्फुरद्विद्युदिव क्षपा ॥३३॥
काश्चित्कनककांचीभिर्मुखराभिरितस्ततः ।
[4]बभ्रमुर्दर्शयंत्योऽस्य श्रोणीस्तन्वंशुकावृताः ॥३४॥
चूतशाखां कुसुमितां प्रगृह्यान्या ललंबिरे ।
सुवर्णकलशप्रख्यान् दर्शयंत्यः पयोधरान् ॥३५॥
काचित्पद्मवनादेत्य सपद्मा पद्मलोचना ।
पद्मवक्त्रस्य पार्श्वेऽस्य पद्मश्रीरिव तस्थुषी ॥३६॥
मधुरं गीतमन्वर्थं काचित्साभिनयं जगौ ।
तं स्वस्थं चोदयंतीव वंचितोऽसीत्यवेक्षितैः ॥३७॥
शुभेन वदनेनान्या भ्रूकार्मुकविकर्षिणा ।
प्रावृत्यानुचकारास्य चेष्टितं वीरलीलया ॥३८॥
पीनवल्गुस्तनी काचिद्वाता[5]घूर्णित्कुंडला ।

[1] श्रस्तांश॰ C P [2] ॰रंभ॰ P (?) [3] हस्त C P [4] बभ्रामु॰ P
[5] Ex conj. वासाघूर्णित॰ C., ॰वास्यघूर्णित॰ P

उच्चैरवजहासैनं समाप्नोतु भवानिति[1] ॥३९॥
अपयान्तं तथैवान्या बबंधुर्माल्यदामभिः ।
काश्चित्साक्षेपमधुरैर्जगृहुर्वचनांकुशैः ॥४०॥
प्रतियोगार्थिनी काचिद्गृहीत्वा चूतवल्लरीं ।
इदं पुष्पं तु कस्येति पप्रच्छ मदविक्लवा ॥४१॥
काचित्पुरुषवत्कृत्वा गतिं संस्थानमेव च ।
उवाचैनं जितः[2] स्त्रीभिर्जय भोः पृथिवीमिमां ॥४२॥
अथ लोलेक्षणा काचिज्जिघ्रंती नीलमुत्पलं ।
किंचिन्मदकलैर्वाक्यैर्नृपात्मजमभाषत ॥४३॥
पश्य भर्तश्चितं चूतं कुसुमैर्मधुगंधिभिः[3] ।
हेमपंजररुद्धो वा[4] कोकिलो यत्र कूजति ॥४४॥
अशोको दृश्यतामेष कामिशोकविवर्धनः ।
रुवंति भ्रमरा यत्र दह्यमाना इवाग्निना ॥४५॥
चूतयष्ट्या समाश्लिष्टो दृश्यतां तिलकद्रुमः ।
शुक्लवासा इव नरः स्त्रिया पीतांगरागया ॥४६॥
फुल्लं कुरुवकं पश्य [5]निर्मुक्तालक्तकप्रभं ।
यो नखप्रभया स्त्रीणां [6]निर्भर्त्सित इवानतः ॥४७॥
बालाशोकश्च निचितो दृश्यतामेष पल्लवैः ।
योऽस्माकं हस्तशोभाभिर्लज्जमान इव स्थितः ॥४८॥

[1] C adds on the margin here a corrupt version of the nândî in the Nâgânanda (*dhyânavyâgam*) [2] जिता C [3] मदगंधिभिः P [4] Sic C P
[5] Ex conj निर्भुक्ता° C P [6] निर्भ्रत्सितः P

दीर्घिकां प्रावृतां पश्य तीरजैः सिंदुवारकैः[1]।
पांडरांशुकसंवीतां शयानां प्रमदामिव ॥४९॥
दृश्यतां स्त्रीषु माहात्म्यं चक्रवाको ह्यसौ जले।
पृष्ठतः प्रेष्यवज्जायामनुवृत्यानुगच्छति ॥५०॥
मत्तस्य परपुष्टस्य रुवतः श्रूयतां ध्वनिः।
अपरः कोकिलोऽनुत्कः प्रतिश्रुत्येव कूजति[2] ॥५१॥
अपि नाम विहंगानां वसंतेनाहितो मदः।
न तु चिंतयतश्चित्तं जनस्य प्राज्ञमानिनः ॥५२॥
इत्येवं ता युवतयो मन्मथोद्दामचेतसः।
कुमारं विविधैस्तैस्तैरुपचक्रमिरे नयैः ॥५३॥
एवमाक्षिप्यमाणो[3]ऽपि स तु धैर्यावृतेंद्रियः।
मर्तव्यमिति सोद्वेगो न जहर्ष न सिस्मिये[4] ॥५४॥
तासां तत्त्वेन वस्थानं दृष्ट्वा स पुरुषोत्तमः।
[5]ससंविग्नेन धीरेण चिंतयामास चेतसा ॥५५॥
किं विना नावगच्छंति चपलं यौवनं स्त्रियः।
यतो रूपेण[6] संपन्नं जरेयं नाशयिष्यति ॥५६॥
नूनमेता न पश्यंति कस्यचिद्रोगसंप्लवं।
तथा हृष्टा भयं त्यक्त्वा जगति व्याधिधर्मिणि ॥५७॥
अनभिज्ञाश्च सुव्यक्तं मृत्योः सर्वापहारिणः।
तथा स्वस्था निरुद्वेगाः क्रीडंति ॑ हसंति च ॥५८॥

[1] Ex conj सिंदुवारजैः C P [2] Ex conj प्रतिश्रुत्केव कूजितः C P [3] ॰मागो C P [4] Sic C P [5] असविघ्नेन ? [6] ॰न C

जरां मृत्युं च व्याधिं च को हि जानन् सचेतनः ।
स्वस्थस्तिष्ठन् निषीदेद्वा [1]सुपेद्वा किं पुनर्हसेत् ॥५९॥
यस्तु दृष्ट्वा परं जीर्णं व्याधितं मृतमेव च ।
स्वस्थो भवति नोद्विग्नो यथाचेतास्तथैव सः ॥६०॥
वियुज्यमानेऽपि तरौ पुष्पैरपि फलैरपि ।
पतति च्छिद्यमाने वा[2] तरुरन्यो न शोचते ॥६१॥
इति ध्यानपरं दृष्ट्वा विषयेभ्यो गतस्पृहं ।
उदायी नीतिशास्त्रज्ञस्तमुवाच सुहृत्तया ॥६२॥
अहं नृपतिना दत्तः सखा तुभ्यं क्षमः किल ।
यस्मात्त्वयि विवक्षा मे तया प्रणयवत्तया ॥६३॥
अहितात् [3]प्रतिषेधश्च हिते चानुप्रवर्तनं ।
व्यसने चापरित्यागस्त्रिविधं मित्रलक्षणं ॥६४॥
सोऽहं मैत्रीं प्रतिज्ञाय पुरुषार्थात्पराङ्मुखं ।
यदि त्वां समुपेक्षेयं[4] न भवेन्मित्रता मयि ॥६५॥
तद्ब्रवीमि सुहृद्भूत्वा तरुणस्य वपुष्मतः ।
इदं न प्रतिरूपं ते स्त्रीष्वदाक्षिण्यमीदृशं ॥६६॥
अनृतेनापि नारीणां युक्तं समनुवर्तनं ।
तद्व्रीडापरिहारार्थमात्मरत्यर्थमेव च ॥६७॥
संनतिश्चानुवृत्तिश्च स्त्रीणां हृदयबंधनं ।
स्नेहस्य हि गुणा योनिर्मानकामाश्च योषितः ॥६८॥

[1] Sic C P  [2] ऽपि P  [3] प्रतिवेध° P  [4] °पेक्षेयं C

तदर्हसि विशालाक्ष हृदयेऽपि पराङ्मुखे ।
रूपस्यास्यानुरूपेण दाक्षिण्येनानुवर्तितुं ॥६९॥
दाक्षिण्यमौषधं स्त्रीणां दाक्षिण्यं भूषणं परं ।
दाक्षिण्यरहितं रूपं निष्पुष्पमिव काननं ॥७०॥
किं वा दाक्षिण्यमात्रेण भावेनास्तु परिग्रहः ।
विषयान् दुर्लभाल्लँब्ध्वा न ह्यवज्ञातुमर्हसि ॥७१॥
कामं परमिति[1] ज्ञात्वा देवोऽपि हि पुरंदरः ।
गौतमस्य मुनेः पत्नीमहल्यां चकमे पुरा ॥७२॥
अगस्त्यः प्रार्थयामास सोमभार्यां च रोहिणीं ।
तस्मात् तत्सदृशं लेभे लोपामुद्रामिति श्रुतिः ॥७३॥
[2]औतथ्यस्य च भार्यायां ममतायां[3] महातपाः ।
मारुत्यां जनयामास भरद्वाजं वृहस्पतिः ॥७४॥
वृहस्पतेर्महिष्यां च जुह्वत्यां जुह्वतां वरः ।
बुधं विबुधधर्माणं जनयामास चंद्रमाः ॥७५॥
कालीं चैव पुरा कन्यां जलप्रभवसंभवां ।
जगाम यमुनातीरे जातरागः पराशरः ॥७६॥
मातंग्यामक्षमालायां गर्हितायां रिरंसया ।
कपिंजलादं तनयं वशिष्ठोऽजनयन्मुनिः ॥७७॥
ययातिश्चैव राजर्षिर्वयस्यपि[4] विनिर्गते ।
विश्वाच्याप्सरसा सार्धं रेमे चैत्ररथे वने ॥७८॥

[1] ॰मितं C   [2] औतस्थ्यस्य C P   [3] Ex conj. समतायां C P   [4] Ex conj. वयस्येऽपि C P

स्त्रीसंसर्गं विनाशांतं पांडुर्ज्ञात्वापि कौरवः ।
माद्रीरूपगुणाक्षिप्तः सिषेवे कामजं सुखं ॥७९॥
करालजनकश्चैव हृत्वा ब्राह्मणकन्यकां ।
[1]अवाप [2]भ्रंशमप्येव न तु त्यजेच्च[3] मंमथं ॥८०॥
एवमाद्या महात्मानो विषयान् गर्हितानपि ।
रतिहेतोर्बुभुजिरे प्रागेव गुणसंहितान् ॥८१॥
त्वं पुनर्न्यायतः प्राप्तान् बलवान् रूपवान् युवा ।
विषयानवजानासि यत्र सक्तमिदं जगत् ॥८२॥
इति श्रुत्वा वचस्तस्य श्लक्ष्णमागमसंहितं ।
मेघस्तनितनिर्घोषः कुमारः प्रत्यभाषत ॥८३॥
उपपन्नमिदं वाक्यं सौहार्दव्यंजकं त्वयि ।
अत्र च त्वानुनेष्यामि यत्र मा दुष्टु मन्यसे ॥८४॥
नावजानामि विषयाञ्जाने लोकं तदात्मकं ।
अनित्यं तु जगन्मत्वा नात्र मे रमते मनः ॥८५॥
जरा व्याधिश्च मृत्युश्च यदि न स्यादिदं त्रयं ।
ममापि हि मनोज्ञेषु विषयेषु रतिर्भवेत् ॥८६॥
नित्यं यद्यपि हि स्त्रीणामेतदेव वपुर्भवेत् ।
ससंवित्कस्य कामेषु तथापि न रतिः क्षमा ॥८७॥
यदा तु जरया पीतं रूपमासां भविष्यति ।
आत्मनोऽप्यनभिप्रेतं मोहात्तत्र रतिर्भवेत् ॥८८॥
मृत्युव्याधिजराधर्मो[4] मृत्युव्याधिजरात्मभिः ।

[1] अपाप P [2] भ्रसमप्येव C [3] Sic P न तु त्यजेन C Query न तु तत्याज ? [4] ॰र्मा ?

रममाणोऽप्यसंविग्नः समानो मृगपक्षिभिः ॥८९॥
यदप्यात्थ महात्मानस्तेऽपि कामात्मका इति ।
संवेगोऽत्र न कर्तव्यो यदा तेषामपि क्षयः ॥९०॥
माहात्म्यं न च तन्मध्ये यत्र सामान्यतः क्षयः ।
विषयेषु [1]प्रसक्तिर्वा युक्तिर्वा नात्मवत्तया ॥९१॥
यद्यप्यात्थानृतेनापि स्त्रीजने वर्त्यतामिति ।
अनृतं नावगच्छामि दाक्षिण्येनापि किंचन ॥९२॥
न चानुवर्तनं तन्मे रुचितं यत्र नार्जवं ।
सर्वभावेन संपर्को यदि नास्ति धिगस्तु तत् ॥९३॥
[2]अनृते श्रद्दधानस्य [3]सक्तस्यादोषदर्शिनः ।
किं हि वंचयितव्यं स्याज्जातरागस्य चेतसः ॥९४॥
[4]वंचयंति च यद्येव जातरागाः परस्परं ।
ननु नैव क्षमं द्रष्टुं नराः स्त्रीणां नृणां स्त्रियः ॥९५॥
तदेवं सति दुःखार्त्तं जरामरणभोगिनं ।
न मां [5]कामेष्वनार्येषु प्रतारयितुमर्हसि ॥९६॥
अहोऽतिधीरं बलवच्च ते मनश्चलेषु कामेषु च सारदर्शिनः ।
भयेऽपि तीव्रे विषयेषु सज्जसे [6]निरीक्षमाणो मरणाध्वनि प्रजाः ॥९७॥
अहं पुनर्भीरुरतीवविक्लवो जराविपद्व्याधिभयं विचिंतयन् ।
[7]लभे न शांतिं न धृतिं कुतो रतिं निशामयन् दीप्तमिवाग्निना जगत् ॥९८॥

[1] प्रशक्तिर्वा C P [2] अनृतैः C P [3] Ex conj. सू° C P [4] Ex conj. संचयति C P [5] कामेषु नार्येषु C [6] निरीक्ष्य° C P [7] लेभे C P

असंशयं मृत्युरिति प्रजानतो नरस्य रागो हृदि यस्य जायते ।
अयोमयीं तस्य परैमि चेतनां महाभये रक्षति यो न रोदिति ॥९९॥
अथो कुमारश्च विनिश्चयात्मिकां चकार कामाश्रयघातिनीं कथां ।
जनस्य चक्षुर्गमनीयमंडलो महीधरं चास्तमियाय भास्करः ॥१००॥
ततो वृथाधारितभूषणस्रजः कलागुणैश्च प्रणयैश्च निष्फलैः ।
[1]स्व एव भावे विनिगुह्य मन्मथं पुरं ययुर्भग्नमनोरथाः स्त्रियः ॥१०१॥
ततः पुरोद्यानगतां जनश्रियं[2] निरीक्ष्य सायं प्रतिसंहृतां पुनः ।
अनित्यतां सर्वगतां विचिंतयन् विवेश धिष्ण्यं क्षितिपाल-
कात्मजः ॥१०२॥
ततः श्रुत्वा राजा विषयविमुखं तस्य तु मनो न शिश्ये तां रात्रिं
[3]हृदयगतशल्यो गज इव ।
अथ श्रांतो मंत्रे बहुविविधमार्गे ससचिवो न सोऽन्यत्कामेभ्यो
नियमनमपश्यत्सुतमतेः ॥१०३॥

इति श्रीबुद्धचरिते महाकाव्ये स्त्रीविघातनो नाम
चतुर्थः सर्गः ॥४॥

[1] Ex conj from the Tibetan स एव C P [The Tibetan reads rangi sems-la yid dkrüg dod-pa-rnams smad-nas, 'in their own mind heart-troubled blaming the desires,' or 'blaming the heart-troubling desires It seems to have read *sva eva bhâve vinigarhya manmatham.* H. W ] [2] Ex conj स्त्रियं C P [3] Ex conj C P omit °गत°

# BOOK V.

स तथा विषयैर्विलोभ्यमानः परमोहैरपि शाक्यराजसूनुः ।
न जगाम रतिं न शर्म लेभे हृदये सिंह इवातिदिग्धविद्धः ॥१॥
अथ मंत्रिसुतैः क्षमैः कदाचित्सखिभिश्चित्रकथैः कृतानुयात्रः ।
वनभूमिदिदृक्षया [1]शमेप्सुर्नरदेवानुमतो वहिः प्रतस्थे ॥२॥
नवरुक्मखलीनकिंकिणीकं प्रचलच्चामरचारुहेमभांडं ।
अभिरुह्य स कंठकं[2] सदश्वं प्रययौ केतुमिव द्रुमाब्जकेतुः ॥३॥
स [3]निकृष्टतरां वनांतभूमिं वनलोभाच्च ययौ महीगुणेच्छुः[4] ।
सलिलोर्मिविकारसीरमार्गां वसुधां चैव ददर्श कृष्यमाणां ॥४॥
हलभिन्नविकीर्णशष्प[5]दर्भां हतसूक्ष्मक्रिमिकांडजंतुकीर्णां[6] ।
समवेक्ष्य रसां तथाविधां तां स्वजनस्येव बधे भृशं शुशोच ॥५॥
कृषतः पुरुषांश्च वीक्षमाणः[7] पवनार्कांशुरजोविभिन्नवर्णान् ।
वहनक्लमविक्लवांश्च धुर्यान् परमार्यः परमां कृपां चकार ॥६॥
[8]अवतीर्य ततस्तुरंगपृष्ठाच्छनकैर्गां व्यचरत् [9]शुचा परीतः ।
जगतो जननव्ययं विचिन्वन्[10] कृपणं खल्विदमित्युवाच चार्त्तः ॥७॥
मनसा च विविक्ततामभीप्सुः सुहृदस्ताननुयायिनो निवार्य ।

[1] समेप्सुः P [2] कंथक C [3] विक्लष्ट° C [4] Ex conj ॰गुणाच्छः C P [5] ॰शाव्य° P [6] Ex conj ॰कण्ठजन्तु° D P (॰कण्ड° C) [7] वीक्ष्य° C P [8] Ex conj अवतार्य C P [9] So Tibetan क्षुधा C, शुधा P [10] Ex conj विचितयन् C P

[1]अभितारलचारुपर्णवत्या [2]विजने मूलमुपेयिवान् स जंब्वाः ॥८॥
निषसाद च पत्रखोरवत्यां[3] भुवि [4]वैदूर्यनिकाशशाद्वलायां ।
जगतः प्रभवव्ययौ विचिंत्य[5] मनसश्च स्थितिमार्गमाललंबे ॥९॥
समवाप्तमनःस्थितिश्च[6] सद्यो विषयेच्छादिभिराधिभिश्च मुक्तः ।
सवितर्कविचारमाप शांतं प्रथमं ध्यानमनाश्रवप्रकारम् ॥१०॥
अधिगम्य ततो विवेकजं तु [7]परमप्रीतिसुखं समाधिं ।
इममेव ततः परं प्रदध्यौ मनसा लोकगतिं निशम्य सम्यक् ॥११॥
कृपणं वत यज्जनः स्वयं सन्नरसो व्याधिजराविनाशधर्मः ।
जरयार्दितमातुरं मृतं वा परमज्ञो विजुगुप्सते मदांधः ॥१२॥
इह चेदहमीदृशः स्वयं सन् विजुगुप्सेय परं तथास्वभावं ।
न भवेत्सदृशं हि तत्क्षमं वा परमं धर्ममिमं विजानतो मे ॥१३॥
इति तस्य विपश्यतो यथावज्जगतो व्याधिजराविपत्तिदोषान् ।
बलयौवनजीवितप्रवृत्तौ विजगामात्मगतो मदः क्षणेन ॥१४॥
न जहर्ष न चापि चानुतेपे विचिकित्सां न ययौ न तंद्रिनिद्रे ।
न च कामगुणेषु संररंजे न च दिद्वेष[8] परं न चावमेने ॥१५॥
इति बुद्धिरियं च नीरजस्का ववृधे तस्य महात्मनो विशुद्धा ।
पुरुषैरपरैरदृश्यमानः पुरुषश्चोपससर्प भिक्षुवेशः ॥१६॥
नरदेवसुतस्तमभ्यपृच्छद्वद कोऽसीति शशंस सोऽथ तस्मै ।

[1] Ex conj. अभितरल° C P  [2] Ex conj विजमूलं C P  [3] Sic C P (the MSS seem to have *yatra*) Should we read पत्रकोरवत्या? The Tibetan would imply सोऽत्र शौचवत्यां  [4] वैडूर्य° C  [5] विचिन्वन् C sec m  [6] Ex conj °मनाः-स्थितेश्च C P  [7] This line lacks two syllables C originally read परमप्रीतिसुख-स्समाधि  [8] Ex conj न वि विद्वेष C न च विद्वेष P

[1]स च पुंगव जन्ममृत्युभीतः श्रमणः प्रव्रजितोऽस्मि मोक्षहेतोः॥१७॥
जगति क्षयधर्मके मुमुक्षुर्मृगयेऽहं शिवमक्षयं पदं तत्।
अजनोऽन्यजनैरतुल्यबुद्धिर्विषयेभ्यो विनिवृत्तरागदोषः॥१८॥
निवसन् क्वचिदेव वृक्षमूले विजने वायतने गिरौ वने वा।
विचराम्यपरिग्रहो निराशः परमार्थाय यथोपपन्नभिक्षुः॥१९॥
इति पश्यत एव राजसूनोरिदमुक्त्वा स नभः समुत्पपात।
स हि तद्वपुरन्यबुद्धिदर्शी स्मृतये तस्य समेयिवान् दिवौकाः॥२०॥
गगणं खगवद्गते च तस्मिन् नृवरः संजहृषे विसिस्मिये च।
उपलभ्य ततश्च धर्मसंज्ञा[2]मभिनिर्याणविधौ मतिं चकार॥२१॥
तत इंद्रसमो जितेंद्रियश्च प्रविविक्षुः परमाश्वमारुरोह।
परिवर्त्य जनं त्ववेक्षमाणा[3]स्तत एवाभिमतं वनं न भेजे॥२२॥
स जरामरणक्षयं चिकीर्षुर्वनवासाय मतिं स्मृतौ निधाय।
प्रविवेश पुनः पुरं न कामाद्वनभूमेरिव मंडलं द्विपेंद्रः॥२३॥
सुखिता वत निर्वृता च सा स्त्री पतिरीदृक्त्वमिवायताक्ष[4] यस्याः।
इति तं समुदीक्ष्य राजकन्या प्रविशंतं पथि [5]सांजलिर्जगाद॥२४॥
अथ घोषमिमं महाभ्रघोषः परिशुश्राव शमं परं च लेभे।
श्रुतवांश्च हि निर्वृतेति शब्दं परिनिर्वाणविधौ मतिं चकार॥२५॥
अथ कांचनशैलशृंगवर्ष्मा गजमेघर्षभवाहुनिस्वनाक्षः[6]।
[7]क्षयमक्षयधर्मजातरागः शशिसिंहाननविक्रमः प्रपेदे॥२६॥

[1] Query नरपुंगव? [2] Ex conj °ज्ञाम् C P [3] अवेक्ष्य° C P [4] Ex conj °त्वमिहा° C °तमिहा° P [5] चाजलि° P, र;जलि° C [6] Ex conj °निस्वराक्षः C °निश्वलाक्षः P [7] गृह in C P in margin

मृगराजगतिस्ततोऽभ्यगच्छन्नृपतिं मंत्रिगणैरुपास्यमानं[1] ।
[2]समितौ मरुतामिव ज्वलंतं मघवंतं त्रिदिवे सनत्कुमारः ॥२७॥
प्रणिपत्य च सांजलिर्बभाषे दिश मह्यं नरदेव साध्वनुज्ञां ।
परिविव्रजिषामि[3] मोक्षहेतोर्नियतो ह्यस्य जनस्य विप्रयोगः ॥२८॥
इति तस्य वचो निशम्य राजा करिणेवाभिहतो द्रुमश्चचाल ।
कमलप्रतिमेऽंजलौ गृहीत्वा वचनं चेदमुवाच वाष्पकंठः ॥२९॥
प्रतिसंहर तात बुद्धिमेतां न हि कालस्तव धर्मसंश्रयस्य ।
वयसि प्रथमे मतौ चलायां बहुदोषां हि वदंति धर्मचर्यां ॥३०॥
विषयेषु कुतूहलेंद्रियस्य व्रतखेदेष्वसमर्थनिश्चयस्य ।
तरुणस्य मनश्चलत्यरण्यादनभिज्ञस्य विशेषतोऽविवेकं ॥३१॥
मम तु प्रियधर्म धर्मकालस्त्वयि लक्ष्मीमवसृज्य लक्ष्यभूते ।
स्थिरविक्रम विक्रमेण धर्मस्तव हित्वा तु गुरुं भवेदधर्मः ॥३२॥
तदिमं व्यवसायमुत्सृज त्वं भव तावन्निरतो गृहस्थधर्मे ।
पुरुषस्य वयःसुखानि भुक्त्वा रमणीयो हि तपोवनप्रवेशः ॥३३॥
इति वाक्यमिदं निशम्य राज्ञः कलविंकस्वर उत्तरं बभाषे ।
यदि मे प्रतिभूश्चतुर्षु राजन् भवसि त्वं न तपोवनं श्रयिष्ये ॥३४॥
न भवेन्मरणाय जीवितं मे विहरेत्स्वास्थ्यमिदं च मे न रोगः[4] ।
न च यौवनमाक्षिपेज्जरा मे न च [5]संपत्तिमपाहरेद्विपत्तिः ॥३५॥
इति दुर्लभमर्थमूचिवांसं तनयं वाक्यमुवाच शाक्यराजः ।
त्यज बुद्धिमिमां गतिप्रवृत्तामवहास्योऽतिमनोरथक्रमश्च ॥३६॥

[1] Ex conj नृपतिर्मंत्रि° C P [2] Ex conj शमितौ C P (श corrected in C) [3] °व्रजिष्यामि C P [4] Ex conj रागः C P [5] संपत्तिं समाहरेत् C

अथ मेरुगुरुर्गुरुं बभाषे यदि नास्ति क्रम एष नास्ति वार्यः ।
शरणाज्ज्वलनेन दह्यमानान्न हि निश्चिक्रमिषुं[1] क्षमं ग्रहीतुं[2] ॥३७॥
जगतश्च यथा ध्रुवो वियोगो न तु धर्माय वरं त्वयं वियोगः ।
अवशं ननु विप्रयोजयेन्मामकृतस्वार्थमतृप्तमेव मृत्युः ॥३८॥
इति भूमिपतिर्निशम्य तस्य व्यवसायं तनयस्य निर्मुमुक्षोः ।
अभिधाय न यास्यतीति भूयो विदधे रक्षणमुत्तमांश्च कामान् ॥३९॥
सचिवैस्तु निदर्शितो यथावद्बहुमानात् प्रणयाच्च शास्त्रपूर्वं ।
गुरुणा च निवारितोऽश्रुपातैः प्रविवेशावमथं ततः स शोचन् ॥४०॥
चलकुंडलचुंबिताननाभिर्घननिश्वासविकंपितस्तनीभिः ।
वनिताभिरधीरलोचनाभिर्मृगशावाभिरिवाभ्युदीक्ष्यमाणः ॥४१॥
स हि कांचनपर्वतावदातो हृदयोन्मादकरो वरांगनानां ।
श्रवणांगविलोचनात्मभावान् वचन[3]स्पर्शवपुर्गुणैर्जहार ॥४२॥
विगते दिवसे ततो विमानं वपुषा सूर्य इव प्रदीप्यमानः ।
तिमिरं विजिघांसुरात्मभासा रविरुद्यन्निव मेरुमारुरोह ॥४३॥
कनकोज्ज्वलदीप्तदीपवृक्षं वरकालागुरुधूपपूर्णगर्भं ।
अधिरुह्य स वज्रभक्तिचित्रं प्रवरं कांचनमासनं [4]सिषेवे ॥४४॥
तत उत्तममुत्तमाश्च नार्यो निशि तूर्यैरुपतस्थुरिंद्रकल्पं ।
हिमवच्छिरसीव[5] चंद्रगौरे द्रविणेंद्रात्मजमप्सरोगणौघाः ॥४५॥
परमैरपि दिव्यतूर्यकल्पैः स तु तैर्नैव रतिं ययौ न हर्षं[6] ।

[1] निश्चिक्रमितुं C (C sec. m. °षुं), निश्रमितुं P [2] गृहीतुं C P [3] वचनं C P [4] शि° P [5] Ex conj. हिमवद्गिरि-गीरि (°सीर C) चंद्रगौरे C P. [6] रतिर्ययौ न हर्षः C

परमार्थसुखाय तस्य साधोरभिनिष्क्रिमिषा यतो न रेमे ॥४६॥
अथ तत्र सुरैस्तपोवरिष्ठैरकनिष्ठैर्व्यवसायमस्य बुद्ध्वा।
युगपत्प्रमदाजनस्य निद्रा विहितासीद्विकृताश्च गात्रचेष्टाः॥४७॥
अभवच्छयिता हि तत्र काचिद्विनिवेश्य प्रचले[1] करे कपोलं।
दयितामपि रुक्मपत्रचित्रां कुपितेवांकगतां विहाय वीणां॥४८॥
विबभौ करलग्नवेणुरन्या स्तनविस्रस्तसितांशुका[2] शयाना।
[3]ऋजुषट्पदपं[4]क्तिजुष्टपद्मा जलफे[5]नप्रहसत्तटा नदीव॥४९॥
नवपुष्करगर्भकोमलाभ्यां तपनीयोज्ज्वलसंगतांगदाभ्यां।
स्वपिति स्म [6]तथा पुरा भुजाभ्यां परिरभ्य प्रियवन्मृदंगमेव॥५०॥
नवहाटकभूषणास्तथान्या वसनं पीतमनुत्तमं वसानाः।
अवशा वत निद्रया निपेतुर्गजभग्ना इव कर्णिकारशाखाः॥५१॥
अवलंब्य गवाक्षपार्श्वमन्या शयिता चापविभुग्नगात्रयष्टिः।
विरराज विलंबिचारुहारा रचिता तोरणशा[7]लभंजिकेव॥५२॥
मणिकुंडलदष्टपत्रलेखं मुखपद्मं विनतं तथापरस्याः।
शतपत्रमिवार्धचक्रनाडं स्थितकारंडवघट्टितं चकाशे॥५३॥
अपराः शयिता यथोपविष्टाः स्तनभारैरवमन्यमानगात्राः।
उपगुह्य परस्परं विरेजुर्भुजपाशैस्तपनीयपारिहार्यैः॥५४॥
महतीं परिवादिनीं च काचिद्वनितालिंग्य सखीमिव प्रसुप्ता[8]।
विजुघूर्ण चलत्सुवर्णसूत्रां[9] वदनेनाकुलकर्णिकोज्ज्वलेन[10]॥५५॥

[1] प्रबले C. [2] °विश्रस्तशिितां° C [3] ऋजु not clear in P [4] °पक्ति° C P.
[5] फेण C. [6] पुरा तथा P [7] Ex conj °मालभंजिकेव C P. [8] प्रसुप्ताः C.
[9] °सूत्रा C P. [10] °कर्णिकोज्वलेन P, °कर्णयोर्ज्जकेन C (?) D

परावं युवतिर्भुजांसदेशादवविस्रंसितचारुपाशमन्या ।
सविलासरतांततांतमूर्वोर्विवरे कांतमिवाभिनीय शिश्ये ॥५६॥
अपरा न बभुर्निमीलिताक्ष्यो विपुलाक्ष्योऽपि शुभभ्रुवोऽपि सत्यः ।
प्रतिसंकुचितारविंदकोशाः सवितर्यस्तमिते यथा नलिन्यः ॥५७॥
शिथिलाकुलमूर्धजा तथान्या[2] जघनस्रस्तविभूषणांशुकांता[3] ।
अशयिष्ट विकीर्णकंठसूत्रा गजभग्ना [4]प्रतिपातितांगनेव ॥५८॥
अपरास्त्ववशा ह्रिया वियुक्ता धृतिमत्योऽपि वपुर्गुणैरुपेताः ।
विनिशश्वसुरुल्वणं शयाना विकृताक्षिप्तभुजा जजृंभिरे च ॥५९॥
व्यपविद्धविभूषणस्रजोऽन्या विसृताग्रंथनवाससो विसंज्ञाः ।
अनिमीलितशुक्लनिश्चलाक्ष्यो न विरेजुः शयिता गतासुकल्पाः ॥६०॥
विवृतास्यपुटा विवृद्धगात्रा[5] प्रपतद्[6]वक्त्रजला प्रकाशगुह्या ।
अपरा मदघूर्णितेव शिश्ये न बभाषे विकृतं वपुः पुपोष ॥६१॥
इति सत्त्वकुलानुरूपरूपं[7] विविधं स प्रमदाजनः शयानः ।
सरसः सदृशं बभार रूपं पवनावर्जितरुग्णपुष्करस्य ॥६२॥
समवेक्ष्य ततश्च ताः शयाना विकृतास्ता युवतीरधीरचेष्टाः ।
गुणवद्वपुषोऽपि वल्गुभासो[8] नृपसूनुः स विगर्हयांबभूव[9] ॥६३॥
अशुचिर्विकृतश्च जीवलोके वनितानामयमीदृशः स्वभावः[10] ।
वसनाभरणैस्तु वंच्यमानः पुरुषः स्त्रीविषयेषु रागमेति ॥६४॥

[1] भुजांश॰ C P [2] ॰मूर्धजास्तथा॰ C P [3] ॰कांताः C P [4] पतिपातागनेव C. [5] ॰गात्री C [6] ॰वक्त्र॰ P [7] रूपं supplied from the Tibetan ॰कुलानुरूप = P, कुलानुरूपं = C [8] ॰भासा C [9] चकार P [10] स्वभागः P.

G 2

[1]विमृशेद्यदि योषितां मनुष्यः प्रकृतिं स्वप्नविकारमीदृशं च ।
ध्रुवमत्र न वर्धयेत्प्रमादं गुणसंकल्पहतस्तु रागमेति[2] ॥६५॥
इति तस्य तदंतरं विदित्वा निशि निष्क्रिमिषा समुद्बभूव ।
अवगम्य मनस्ततोऽस्य देवैर्भवनद्वारमपावृतं बभूव[3] ॥६६॥
अथ सोऽवततार हर्म्यपृष्ठाद्युवतीस्ताः शयिता विगर्हमाणः[4] ।
अवतीर्य ततश्च निर्विशंको गृहकक्ष्यां[5] प्रथमं विनिर्जगाम ॥६७॥
तुरगावचरं स बोधयित्वा जविनं छंदकमित्थमित्युवाच ।
हयमानय कंथकं त्वरावान् अमृतं प्राप्तुमितोऽद्य मे यियासा ॥६८॥
हृदि या मम तुष्टिरद्य जाता व्यवसायश्च यथा धृतौ निविष्टः ।
विजनेऽपि च नाथवानिवास्मि ध्रुवमर्थोऽभिमुखः स मे य
इष्टः ॥६९॥
ह्रियमेव च संनतिं च हित्वा शयिता मत्प्रमुखे[6] यथा युवत्यः ।
विवृते च यथा स्वयं कपाटे नियतं यातुमनामयाय कालः ॥७०॥
प्रतिगृह्य ततः स भर्तुराज्ञां विदितार्थोऽपि नरेंद्रशासनस्य ।
मनसीव परेण चोद्यमानस्तुरगस्यानयने मतिं चकार ॥७१॥
अथ हेमखलीनपूर्णवक्त्रं लघुशय्यास्तरणोपगूढपृष्ठं ।
बलसत्त्वजवत्वरोपपन्नं[7] स वराश्वं तमुपानिनाय भर्त्रे ॥७२॥
प्रततत्रिकपुच्छमूलपार्ष्णिं निभृतं ह्रस्वतनूजपृष्ठकर्णं ।
विनतोन्नतपृष्ठकुक्षिपार्श्वं विपुलप्रोथललाटकट्युरस्कं ॥७३॥

[1] विमृषेद् C [2] This sloka not in P [3] चकार C P, but बभूव sec m in C [4] °नः P [5] °कच्यं C P [6] °खं P [7] Ex conj °जवत्वलोपपन्नं C, °जवंवलोप° D P.

उपगुह्य स तं विशालवक्षाः कमलाभेन च शांत्वयन् करेण ।
मधुराक्षरया गिरा शशास ध्वजिनीमध्यमिव प्रवेष्टुकामः ॥७४॥
बहुशः, कलिशत्रवो निरस्ताः समरे त्वामधिरुह्य पार्थिवेन ।
अहमप्यमृतं परं यथावत्तुरगश्रेष्ठ लभेय तत्कुरुष्व ॥७५॥
सुलभाः खलु संयुगे सहाया विषयावाप्तसुखे धनार्जने वा ।
पुरुषस्य तु दुर्लभाः सहायाः पतितस्यापदि धर्मसंश्रये वा ॥७६॥
इह चैव भवंति ये सहायाः कलुषे धर्मणि धर्मसंश्रये वा ।
अवगच्छति मे यथांतरात्मा नियतं तेऽपि जनास्तदंशभाजः ॥७७॥
तदिदं परिगम्य धर्मयुक्तं मम निर्याणमतो जगद्धिताय ।
तुरगोत्तम वेगविक्रमाभ्यां प्रयतस्वात्महिते जगद्धिते च ॥७८॥
इति सुहृदमिवानुशिष्य कृत्ये तुरगवरं नृवरो वनं यियासुः ।
सितमसित[1]गतिद्युतिर्वपुष्मान् रविरिव शारदमभ्रमारुरोह ॥७९॥
अथ स परिहरन्निशीथचंडं परिजनबोधकरं ध्वनिं सदश्वः ।
विगतहनुरवः प्रशांतहेषश्चकितविमुक्तपदक्रमो[2] जगाम ॥८०॥
कनकवलयभूषितप्रकोष्ठैः कमलनिभैः कमलानि च प्रविध्य[3] ।
अवनततनवस्ततोऽस्य यक्षाश्चकितगतेर्दधिरे खुरान् कराग्रैः[4] ॥८१॥
गुरुपरिघकपाटसंवृता या न सुखमपि द्विरदैरपाव्रियंते[5] ।
व्रजति नृपसुते गतस्वनास्ताः स्वयमभवन् विवृताः पुरः प्रतो-
ल्यः ॥८२॥
पितरमभिमुखं सुतं च बालं जनमनरक्तमनुत्तमां च लक्ष्मीं ।

[1] Explained in margin of C अग्निद्युति [2] चकितपदन्यमुक्तक्रमो P.
[3] प्रविध्यः C [4] करान् खुराग्रैः P [5] Ex conj °पाध्रियंते C P

कृतमतिरपहाय निर्व्यपेक्षः पितृनगरात् स ततो विनिर्जगाम ॥८३॥
अथ स [1]विकचपंकजायताक्षः पुरमवलोक्य ननाद सिंहनादं ।
जननमरणयोरदृष्टपारो न पुनरहं कपिलाह्वयं प्रविष्टा[2] ॥८४॥
इति वचनमिदं निशम्य तस्य द्रविणपतेः परिषद्गणा ननंदुः ।
प्रमुदितमनसश्च देवसंघा व्यवसितपारणमाशशंसिरेऽस्मै ॥८५॥
हुतवहवपुषो दिवौकसोऽन्ये व्यवसितमस्य च दुष्करं विदित्वा ।
अकुरुत[2] तुहिने पथि प्रकाशं घनविवरप्रसृता इवेंदुपादाः ॥८६॥
हरितुरगतुरंगवत्तुरंगः स तु विचरन् मनसीव चोद्यमानः ।
अरुणपरुषभारमंतरीक्षं[3] [4]सरसबहूनि जगाम योजनानि ॥८७॥

इति श्रीबुद्धचरिते महाकाव्येऽभिनिष्क्रमणो नाम
पंचमः सर्गः ॥५॥

[1] Ex conj विकज° C, विकत° P [2] Sic C P [3] Sic C P. Query परुषभावम्? [4] Sic D and C sec. m, सचस° P and C pr. m

# BOOK VI.

ततो मुहूर्तेऽभ्युदिते[1] जगच्चक्षुषि भास्करे ।
भार्गवस्याश्रमपदं स ददर्श नृणां वरः ॥१॥
सुप्तविश्वस्तहरिणं स्वस्थस्थितविहंगमं ।
विश्रांत इव यद्दृष्टा कृतार्थ इव चाभवत् ॥२॥
स विस्मयनिवृत्त्यर्थं तपःपूजार्थमेव च ।
स्वां चानुवर्तितां [2]रक्षन्नश्वपृष्ठादवातरत् ॥३॥
अवतीर्य च पस्पर्श निस्तीर्णमिति वाजिनं ।
छंदकं चाब्रवीत् प्रीतः स्नापयन्निव चक्षुषा ॥४॥
इमं [3]तार्क्ष्योपमजवं तुरंगमनुगच्छता ।
दर्शिता सौम्य मद्भक्तिर्विक्रमश्चायमात्मनः ॥५॥
सर्वथास्म्यन्यकार्योऽपि गृहीतो भवता हृदि ।
भर्तृस्नेहश्च यस्यायमीदृशः [4]शक्त एव च ॥६॥
अस्निग्धोऽपि समर्थोऽस्ति [5]निःसामर्थ्योऽपि भक्तिमान् ।
भक्तिमांश्चैव शक्तश्च दुर्लभस्त्वद्विधो भुवि ॥७॥
तत्प्रीतोऽस्मि तवानेन महाभागेन कर्मणा ।
दृश्यते मयि भावोऽयं फलेभ्योऽपि पराङ्मुखे ॥८॥

[1] मुहूर्ताभ्युदिते C [2] पश्यन् P. [3] तार्क्ष्य° C P [4] Ev co सक्त C P [5] निःसामर्थो C P

को जनस्य फलस्थस्य न स्यादभिमुखो जनः ।
[1]जनीभवति भूयिष्ठं स्वजनोऽपि विपर्यये ॥९॥
कुलार्थं धार्यते पुत्रः पोषार्थं सेव्यते पिता ।
आशयाश्लिष्यति जगन्नास्ति निष्कारणास्वता ॥१०॥
किमुक्त्वा बहु संक्षेपात्कृतं मे [2]सुमहत्प्रियं ।
निवर्तस्वाश्वमादाय संप्राप्तोऽस्मीप्सितं वनं ॥११॥
इत्युक्त्वा स महाबाहुरानृशंसचिकीर्षया ।
भूषणान्यवमुच्यास्मै संतप्तमनसे ददौ[3] ॥१२॥
मुकुटोद्दीप्तकर्माणं मणिमादाय भास्वरं ।
ब्रुवन् वाक्यमिदं तस्थौ सादित्य इव मंदरः[4] ॥१३॥
अनेन मणिना छंद प्रणम्य बहुशो नृपः ।
विज्ञाप्योऽमुक्तविश्रंभं[5] संतापविनिवृत्तये ॥१४॥
जरामरणनाशार्थं प्रविष्टोऽस्मि तपोवनं ।
न खलु स्वर्गतर्षेण नास्नेहेन न मन्युना ॥१५॥
तदेवमभिनिष्क्रांतं न मां शोचितुमर्हसि ।
भूत्वापि हि चिरं श्लेषः कालेन न भविष्यति ॥१६॥
ध्रुवो यस्माच्च विश्लेषस्तस्मान्मोक्षाय मे मतिः ।
विप्रयोगः कथं न स्याद्भूयोऽपि स्वजनादिभिः ॥१७॥
शोकत्यागाय निष्क्रांतं न मां शोचितुमर्हसि ।

[1] Sic C P (but P has **जनीभविति**) Should we read **जन्यो भवति**, 'a common man'?
[2] Ex conj **स्वमहत्** C, **स्वमहत्** P D
[3] **दधौ** C, **दशै** P.
[4] **मंडरः** C
[5] **०भः** P

शोकहेतुषु कामेषु [1]सक्ताः शोच्यास्तु रागिणः ॥१८॥
अयं च किल पूर्वेषामस्माकं निश्चयः स्थिरः ।
इति दायादभूतेन न शोच्योऽस्मि [2]पथा व्रजन् ॥१९॥
भवंति ह्यर्थदायादाः पुरुषस्य विपर्यये ।
पृथिव्यां धर्मदायादा दुर्लभास्तु न संति वा ॥२०॥
यदपि स्यादसमये यातो वनमसाविति ।
अकालो[3] नास्ति धर्मस्य जीविते चंचले सति ॥२१॥
तस्मादद्यैव मे श्रेयश्चेतव्यमिति निश्चयः ।
जीविते को हि विश्रंभो मृत्यौ प्रत्यर्थिनि[4] स्थिते ॥२२॥
एवमादि त्वया सौम्य विज्ञाप्यो वसुधाधिपः ।
प्रयतेथास्तथा चैव यथा मां न स्मरेदपि ॥२३॥
अपि नैर्गुण्यमस्माकं वाच्यं नरपतौ त्वया ।
नैर्गुण्यात्त्यज्यते स्नेहः स्नेहत्यागान्न शोच्यते ॥२४॥
इति वाक्यमिदं[5] श्रुत्वा छंदः संतापविक्लवः ।
वाष्पग्रथितया वाचा प्रत्युवाच कृतांजलिः ॥२५॥
अनेन तव भावेन बांधवायासदायिना ।
भर्तः सीदति मे चेतो[6] नदीपंक इव द्विपः ॥२६॥
कस्य नोत्पादयेद्वाष्पं निश्चयस्तेऽयमीदृशः ।
अयोमयेऽपि हृदये किं पुनः स्नेहविक्लवे ॥२७॥
विमानशयनार्हं हि सौकुमार्यमिदं क्व च ।

[1] शक्ताः C P. [2] यथा C P [3] अकाले P [4] प्रवैरिणि C in ma. n
इमं P. [6] चित्तं P

खरदर्भांकुरवती तपोवनमही क्व च ॥२८॥
श्रुत्वा तु व्यवसायं ते यदश्वोऽयं मया हृतः।
बलात्कारेण तन्नाथ दैवेनैवास्मि कारितः ॥२९॥
कथं ह्यात्मवशो जानन् व्यवसायमिमं[1] तव।
उपानयेयं तुरगं शोकं कपिलवस्तुनः[2] ॥३०॥
तन्नार्हसि महाबाहो विहातुं पुत्रलालसं।
स्निग्धं वृद्धं च राजानं सद्धर्ममिव नास्तिकः ॥३१॥
संवर्धनपरिश्रांतां द्वितीयां तां च मातरं।
देव नार्हसि विस्मर्तुं कृतघ्न इव सत्क्रियां ॥३२॥
बालपुत्रां [3]गुणवतीं कुलश्लाघ्यां पतिव्रतां।
देवीमर्हसि न त्यक्तुं [4]क्लीवः प्राप्तामिव श्रियं ॥३३॥
पुत्रं याशोधरं श्लाघ्यं यशोधर्मभृतां वरः।
बालमर्हसि न त्यक्तुं व्यसनीवोत्तमं यशः ॥३४॥
अथ बंधुं[5] च राज्यं च त्यक्तुमेव कृता मतिः।
मां नार्हसि विभो त्यक्तुं त्वत्पादौ हि गतिर्मम ॥३५॥
नास्मि यातुं पुरं शक्तो दह्यमानेन चेतसा।
त्वामरण्ये[6] परित्यज्य सुमित्र इव राघवं ॥३६॥
किं हि वक्ष्यति राजा मां त्वदृते नगरं गतं।
वक्ष्याम्युचितदर्शित्वात्किं तवांतःपुराणि वा ॥३७॥
यदप्यात्थापि नैर्गुण्यं वाच्यं नरपताविति।

[1] इदं C P [2] °वास्तुनः C P [3] कुलवतीं P [4] क्लीवप्राप्तां P
[5] बंधूंश्च ? [6] आरण्ये C P

किं तद्वक्ष्याम्यभूतं ते निर्दोषस्य मुनेरिव ॥३८॥
हृदयेन सलज्जेन जिह्वया सज्जमानया ।
अहं यद्यपि वा ब्रूयां [1]कस्तच्छ्रद्धातुमर्हति ॥३९॥
यो हि चंद्रमसस्तैक्ष्ण्य कथयेच्छ्रद्दधीत वा ।
स [2]दोषांस्तव दोषज्ञ कथयेच्छ्रद्दधीत वा ॥४०॥
सानुक्रोशस्य सततं नित्यं करुणवेदिनः ।
स्निग्धत्यागो न सदृशो निवर्तस्व प्रसीद मे ॥४१॥
इति शोकाभिभूतस्य श्रुत्वा छंदस्य भाषितं ।
स्वस्थः परमया धृत्या जगाद वदतां वरः ॥४२॥
मद्वियोगं प्रति च्छंद संतापस्त्यज्यतामयं ।
नानाभावो हि नियतं पृथग्जातिषु देहिषु ॥४३॥
स्वजनं यद्यपि स्नेहान्न त्यजेयं मुमुक्षया ।
मृत्युरन्योन्यमवशानस्मान् संत्याजयिष्यति ॥४४॥
महत्या तृष्णया दुःखैर्गर्भेणास्मि [3]यया[4] धृतः ।
तस्या निष्फलयत्नायाः क्वाहं मातुः क्व सा मम ॥४५॥
वासवृक्षे समागम्य विगच्छंति यथांडजाः ।
नियतं विप्रयोगांतस्तथा भूतसमागमः ॥४६॥
समेत्य च यथा भूयो व्यपयांति वलाहकाः ।
संयोगो विप्रयोगश्च तथा मे प्राणिनां मतः ॥४७॥
यस्माद्याति च लोकोऽयं विप्रलभ्य[5] परस्परं ।

[1] कस्तं श्रद्धातुं C P [2] दोषास्तव C P [3] गर्भेन C P. [4] मय P
[5] in marg वंचयित्वा

ममत्वं न क्षमं तस्मात्स्वप्नभूते समागमे ॥४८॥
सहजेन वियुज्यंते पर्णरागेण[1] पादपाः ।
अन्येनान्यस्य विश्लेषः किं पुनर्न भविष्यति ॥४९॥
तदेवं सति संतापं मा कार्षीः सौम्य गम्यतां ।
लंबते यदि तु स्नेहो गत्वापि पुनराव्रज ॥५०॥
[2]ब्रूयाश्चास्मास्वनाक्षेपं जनं कपिलवस्तुनि ।
त्यज्यतां तद्गतः स्नेहः श्रूयतां चास्य निश्चयः ॥५१॥
क्षिप्रमेष्यति वा कृत्वा जरामृत्युक्षयं किल ।
अकृतार्थो निरालंबो[3] निधनं यास्यतीति वा ॥५२॥
इति तस्य वचः श्रुत्वा [4]कंथकस्तुरगोत्तमः ।
जिह्वया लिलिहे पादौ वाष्पमुष्णं मुमोच च ॥५३॥
जालिना स्वस्तिकांकेन वक्रमध्येन पाणिना ।
आममर्श कुमारस्तं बभाषे च वयस्यवत् ॥५४॥
मुंच [5]कंथक मा वाष्पं दर्शितेयं सदश्वता ।
मृष्यतां सफलः शीघ्रं श्रमस्तेऽयं भविष्यति ॥५५॥
मणित्सरुं छंदकहस्तसंस्थं ततः स धीरो निशितं गृहीत्वा ।
कोषादसिं कांचनभक्तिचित्रं विलादिवाशीविषमुद्बबर्ह ॥५६॥
निष्कास्य तं चोत्पलपत्रनीलं चिच्छेद चित्रं मुकुटं सकेशं ।
विकीर्यमाणांशुकमंतरीक्षे चिक्षेप चैनं सरसीव हंसं ॥५७॥
पूजाभिलाषेण च बाहुमान्याद्दिवौकसस्तं जगृहुः प्रविद्धं ।

[1] ०रागेन C P [2] ब्रूयाश्चा० C P [3] निरारंभो C. [4] कंठकः P
[5] कंठक P.

यथावदेनं दिवि देवसंघा दिव्यैर्विशेषैर्महयां च चक्रुः ॥५८॥
मुक्त्वा त्वलंकारकलत्रवत्तां श्रीविप्रवासं शिरसश्च कृत्वा ।
दृष्ट्वांशुकं कांचनहंसचित्रं[1] वन्यं स धीरोऽभिचकांक्ष वासः ॥५९॥
ततो मृगव्याधवपुर्दिवौका भावं विदित्वास्य विशुद्धभावः ।
काषायवस्त्रोऽभिययौ समीपं तं शाक्यराजप्रभवोऽभ्युवाच ॥६०॥
शिवं च काषायमृषिध्वजस्ते न युज्यते हिंस्रमिदं धनुश्च ।
तत्सौम्य यद्यस्ति न [2]सक्तिरत्र मह्यं प्रयच्छेदमिदं गृहाण ॥६१॥
व्याधोऽब्रवीत्कामद [3]काममारादनेन विश्वास्य मृगान् निहत्य ।
अर्थस्तु शक्रोपम यद्यनेन हंत प्रतीच्छानय शुक्लमेतत् ॥६२॥
परेण हर्षेण ततः स वन्यं जग्राह वासोंऽशुकमुत्ससर्ज ।
व्याधस्तु दिव्यं वपुरेव बिभ्रत् तच्छुक्लमादाय दिवं जगाम ॥६३॥
ततः कुमारश्च स चाश्वगोपस्तस्मिंस्तथा याति विसिस्मियाते ।
आरण्यके वाससि चैव भूयस्तस्मिन्नकार्ष्टां[4] बहुमानमाशु ॥६४॥
छंदं ततः साश्रुमुखं विसृज्य काषायसंविद्वृत[5]कीर्तिभृत्सः ।
येनाश्रमस्तेन ययौ महात्मा संध्याभ्रसंवीत इवाद्रिराजः ॥६५॥
ततस्तथा भर्तरि राज्यनिःस्पृहे तपोवनं याति विवर्णवाससि ।
भुजौ समुत्क्षिप्य ततः स वाजिभृद्भृशं विचुक्रोश पपात च
क्षितौ ॥६६॥
विलोक्य भूयश्च रुरोद सस्वरं हयं भुजाभ्यामुपगुह्य[6] कंथकं ।
ततो निराशो विलपन्मुहुर्मुहुर्ययौ शरीरेण पुरं न चेतसा ॥६७॥

[1] चिह्नं C [2] Ex conj. शक्तिः C P [3] The Tibetan reads कामसारात् ; see Appendix [4] अकार्ष्टां C P [5] °संविङ्वृत° P [6] °गृह्य C

क्वचित्प्रदध्यौ विललाप च क्वचित् क्वचित्प्रचस्खाल पपात च
    क्वचित्।
अतो व्रजन् भक्तिवशेन दुःखितश्चचार बह्वीरवशः पथि क्रि-
    याः ॥६८॥

इति श्रीबुद्धचरिते महाकाव्ये छंदकनिवर्तनं[1] नाम षष्ठः
सर्गः ॥६॥

[1] °नो C.

# BOOK VII.

ततो विसृज्याश्रुमुखं रुदंतं छंदं वनच्छंदतया निरास्थः ।
सर्वार्थसिद्धो वपुषाभिभूय तमाश्रमं सिद्धमिव प्रपेदे ॥१॥
स राजसूनुर्मृगराजगामी मृगाजिरं तन्मृगवत् प्रविष्टः ।
लक्ष्मीवियुक्तोऽपि शरीरलक्ष्म्या चक्षूंषि सर्वाश्रमिणां जहार ॥२॥
स्थिता हि हस्तस्थयुगास्तथैव कौतूहलाच्चक्रधराः सदाराः ।
तमिंद्रकल्पं ददृशुर्न जग्मुर्धुर्या इवार्धावनतैः शिरोभिः ॥३॥
विप्राश्च गत्वा बहिरिध्महेतोः प्राप्ताः[1] समित्पुष्पपवित्रहस्ताः ।
तपःप्रधानाः[1] कृतबुद्धयोऽपि तं द्रष्टुमीयुर्न मठानभीयुः ॥४॥
हृष्टाश्च केका मुमुचुर्मयूरा दृष्ट्वांबुदं नीलमिवोन्नमंतं ।
शष्पाणि[2] हित्वाभिमुखाश्च तस्थुर्मृगाश्चलाक्षा मृगचारिणश्च ॥५॥
दृष्ट्वा तमिक्ष्वाकुकुलप्रदीपं ज्वलंतमुद्यंतमिवांशुमंतं ।
कृतेऽपि दोहे जनितप्रमोदाः [3]प्रसुस्रुवुर्होमदुहश्च गावः ॥६॥
कश्चिद्वसूनामयमष्टमः स्यात्स्यादश्विनोरन्यतरश्च्युतोऽत्र ।
उच्चैरुच्चैरिति तत्र वाचस्तद्दर्शनाद्विस्मयजा मुनीनां ॥७॥
[4]लेखर्षभस्येव वपुर्द्वितीयं धामेव लोकस्य चराचरस्य ।
स द्योतयामास वनं हि कृत्स्नं यदृच्छया सूर्य इवावतीर्णः ॥८॥

[1] C P omit ः    [2] ॰नि P    [3] प्रस्नुस्रुवुः C    [4] लेषर्षभस्येव C D P, — h देवर्षभस्य in marg in C D

ततः स तैराश्रमिभिर्यथावदभ्यर्चितश्चोपनिमंत्रितश्च ।
प्रत्यर्चयां धर्मभृतो[1] बभूव स्वरेण [2]भाद्रांबुधरोपमेन ॥९॥
कीर्णं ततः पुण्यकृता जनेन स्वर्गाभिकामेन विमोक्षकामः ।
तमाश्रमं सोऽनुचचार धीरस्तपांसि चित्राणि [3]निरीक्षमाणः ॥१०॥
तपोविकारांश्च निरीक्ष्य सौम्यस्तपोवने तत्र तपोधनानां ।
तपस्विनं कंचिदनुव्रजंतं तत्त्वं विजिज्ञासुरिदं बभाषे ॥११॥
तत्पूर्वमद्याश्रमदर्शनं मे यस्मादिमं धर्मविधिं न जाने ।
तस्माद्भवानर्हति भाषितुं मे यो निश्चयो यं प्रति वः[5] प्रवृत्तः ॥१२॥
ततो द्विजातिः स तपोविहारः शाक्यर्षभायर्षभविक्रमाय ।
क्रमेण तस्मै कथयांचकार [6]तपोविशेषं तपसः फलं च ॥१३॥
अग्राम्यमन्नं सलिलप्ररूढं[7] पर्णानि तोयं फलमूलमेव ।
यथागमं वृत्तिरियं मुनीनां भिन्नास्तु ते ते तपसां विकल्पाः ॥१४॥
[8]उंछेन जीवंति खगा इवान्ये तृणानि केचिन्मृगवच्चरंति ।
केचिद्भुजंगैः सह वर्तयंति वल्मीकभूता इव मारुतेन ॥१५॥
अश्मप्रयत्नार्जितवृत्तयोऽन्ये केचित्स्वदंतापहतान्नभक्षाः ।
कृत्वा परार्थं श्रपणं तथान्ये कुर्वंति कार्यं यदि शेषमस्ति ॥१६॥
केचिज्जलक्लिन्नजटाकलापा द्विः पावकं जुह्वति मंत्रपूर्वं ।

[1] धर्मभृतां P. [2] Ex conj. स्राड्रांबु° C, श्रा° P, स्राड्रांबु° D (contra metr.).
[3] निरीक्ष्यमाणः P C (°नः C) [4] सौम्य तपो° P [5] C adds in marg. युष्मान प्रति. [6] तपोविशेषां तपसः C. [7] Ex conj. सलिलं प्ररूढं C P.
[8] उञ्छेन C P

मीनैः समं केचिदपो विगाह्य वसंति कूर्मोल्लिखितैः शरीरैः ॥१७॥
एवंविधैः कालचितैस्तपोभिः[1] परैर्दिवं यांत्यपरैर्नृलोकं ।
दुःखेन मार्गेण सुखं क्षियंति[2] दुःखं हि धर्मस्य वदंति मूलं ॥१८॥
इत्येवमादि द्विपदेंद्रवत्सः श्रुत्वा वचस्तस्य तपोधनस्य ।
अदृष्टतत्त्वोऽपि न संतुतोष शनैरिदं चात्मगतं जगाद ॥१९॥
दुःखात्मकं[3] नैकविधं तपश्च स्वर्गप्रधानं तपसः फलं च ।
लोकाश्च सर्वे परिणामवंतः स्वल्पे[4] श्रमः खल्वयमाश्रमा-
णां[5] ॥२०॥
श्रियं च बंधून् विषयांश्च हित्वा ये स्वर्गहेतौ नियमं चरंति ।
ते विप्रयुक्ताः खलु गंतुकामा महत्तरं स्वं वनमेव भूयः ॥२१॥
कायक्लमैर्यश्च तपोऽभिधानैः प्रवृत्तिमाकांक्षति[6] कामहेतोः ।
संसारदोषानपरीक्षमाणो[7] दुःखेन सोऽन्विच्छति दुःखमेव ॥२२॥
त्रासश्च नित्यं मरणात्प्रजानां यत्नेन चेच्छंति पुनः प्रसूतिं ।
सत्यां प्रवृत्तौ नियतश्च मृत्युस्तत्रैव मग्नो यत एव भीतः ॥२३॥
इहार्थमेके प्रविशंति खेदं स्वर्गार्थमन्ये श्रममाप्नुवंति ।
सुखार्थमाशाकृपणोऽकृतार्थः पतत्यनर्थे खलु जीवलोकः ॥२४॥
न खल्वयं गर्हित एव यत्नो यो हीनमुत्सृज्य विशेषगामी ।
प्राज्ञैः समानेन परिश्रमेण कार्यं तु तद्यत्र पुनर्न कार्यं ॥२५॥
शरीरपीडा तु यदीह धर्मः सुखं शरीरस्य भवत्यधर्मः ।
धर्मेण चाप्नोति सुखं परत्र तस्मादधर्मं फलतीह धर्मः ॥२६॥

[1] ०चित्तैः P [2] क्षिपंति P, क्षपोत C [3] दुःखात्मकं C P [4] C adds marg. note फले [5] ०मानां C P [6] आकाङ्क्षति P [7] अपरीक्ष्यमाणो C P

यतः शरीरं मनसो वशेन प्रवर्तते वापि निवर्तते वा ।
युक्तो दमश्चेतस एव तस्माच्चित्तादृते काष्ठसमं शरीरं ॥२७॥
आहारशुद्ध्या यदि पुण्यमिष्टं तस्मान्मृगाणामपि[1] पुण्यमस्ति[2] ।
ये चापि वाह्याः पुरुषाः फलेभ्यो भाग्यापराधेन पराङ्मुख-
त्वात्[3] ॥२८॥
दुःखेऽभिसंधिस्त्वथ पुण्यहेतुः सुखेऽपि[4] कार्यो ननु सोऽभिसंधिः ।
अथ प्रमाणं न सुखेऽभिसंधिर्दुःखे प्रमाणं ननु नाभिसंधिः ॥२९॥
तथैव ये कर्मविशुद्धिहेतोः[5] स्पृशंत्यपस्तीर्थमिति प्रवृत्ताः ।
तत्रापि तोषो हृदि केवलोऽयं न पावयिष्यंति हि[6] पापमापः ॥३०॥
स्पृष्टं हि यद्यद्गुणवद्भिरंभस्तत्तत्पृथिव्यां यदि तीर्थमिष्टं ।
तस्माद्गुणानेव[7] परैमि तीर्थमापस्तु निःसंशयमाप एव ॥३१॥
इति स्म तत्तद्बहुयुक्तियुक्तं जगाद चास्तं च ययौ विवस्वान् ।
ततो हविर्धूमविवर्णवृक्षं तपःप्रशांतं स वनं विवेश ॥३२॥
अभ्युद्धृतप्रज्वलिताग्निहोत्रं कृताभिषेकर्षिजनावकीर्णं ।
जाप्यस्वनाकूजितदेवकोष्ठं धर्मस्य कर्मांतमिव प्रवृत्तं ॥३३॥
[8]काश्चिन्निशास्तत्र निशाकराभः [9]परीक्षमाणश्च तपांस्युवास ।
सर्वं परिक्षेप्य तपश्च[10] मत्वा तस्मात्तपःक्षेत्रतलाज्जगाम ॥३४॥
[11]अन्वव्रजन्नाश्रमिणस्ततस्तं तद्रूपमाहात्म्यगतैर्मनोभिः ।
देशादनार्यैरभिभूयमानान्महर्षयो धर्ममिवापयातं ॥३५॥

[1] मृगानाम् C. [2] पुण्यमिष्ट P. [3] पराङ्मुखांधाः P, and so C D sec m.
[4] ऽभिकार्यो P. [5] °शुद्ध C [6] P omits [7] Ex conj तस्माद्गुणान्येव P, °णाणेव C. [8] Ex conj कश्चि° C P [9] परीच्य° P [10] तपांसि P
[11] अन्वूव्रजन् C (D has नु as a correction over न्व).

ततो जटावल्कलचीरखेलांस्तपोधनांश्चैव स तान्ददर्श ।
तपांसि चैषामनुबुध्यमानस्तस्थौ[1] शिवे श्रीमति मार्गवृक्षे ॥३६॥
अथोपसृत्याश्रमवासिनस्तं मनुष्यवर्यं परिवार्य तस्थुः ।
वृद्धश्च तेषां बहुमानपूर्वं कलेन [2]साम्ना [3]गिरमित्युवाच ॥३७॥
त्वय्यागते पूर्ण इवाश्रमोऽभूत्संपद्यते शून्य इव प्रयाते ।
तस्मादिमं नार्हसि तात हातुं जिजीविषोर्देहमिवेष्टमायुः ॥३८॥
ब्रह्मर्षिराजर्षिसुरर्षिजुष्टः पुण्यः समीपे हिमवान् हि शैलः ।
तपांसि तान्येव तपोधनानां यत्संनिकर्षाद्बहुलीभवंति ॥३९॥
तीर्थानि पुण्यान्यभितस्तथैव सोपानभूतानि नभस्तलस्य ।
जुष्टानि धर्मात्मभिरात्मवद्भिर्देवर्षिभिश्चैव म[4]हर्षिभिश्च ॥४०॥
इतश्च भूयः क्षम[5]मुत्तरैव दिक्सेवितुं धर्मविशेषहेतोः ।
न हि क्षमं दक्षिणतो बुधेन पदं भवेदेकमपि प्रयातुं ॥४१॥
तपोवनेऽस्मिन्नथ निष्क्रियो वा संकीर्णधर्मा[6] पतितोऽशुचिर्वा ।
दृष्टस्त्वया येन न ते विवत्सा तद्ब्रूहि यावद्रुचितोऽस्तु वासः ॥४२॥
इमे हि वांछंति तपःसहायं तपोनिधानप्रतिमं भवंतं ।
वासस्त्वया हींद्रसमेन सार्धं वृहस्पतेरभ्युदयावहः स्यात् ॥४३॥
इत्येवमुक्ते स तपस्विमध्ये तपस्विमुख्येन [7]मनीषिमुख्यः ।
भवप्रणाशाय कृतप्रतिज्ञः स्वं भावमन्तर्गतमाचचक्षे ॥४४॥
ऋज्वात्मनां धर्मभृतां मुनीनामिष्टातिथित्वात्स्वजनोपमानं ।
एवंविधैर्मां प्रति भावजातैः प्रीतिः परमा जनितश्च मार्गः ॥४५॥

[1] अनुरुध्य° C  [2] C adds as a marginal note वेदेन.  [3] Ex conj. गिरिम् C P [illegible] vii 51  [4] नृपर्षि° C  [5] C adds as a note युक्तं.  [6] °धर्मे P  [7] मनस्वि° P

स्निग्धाभिराभिर्हृदयंगमाभिः समासतः स्नात इवास्मि वाग्भिः ।
रतिश्च मे धर्मनवग्रहस्य विस्पंदिता संप्रति भूय एव ॥४६॥
एवं प्रवृत्तान् भवतः शरण्यानतीव संदर्शितपक्षपातान् ।
यास्यामि हित्वेति ममापि दुःखं यथैव बंधूंस्त्यजतस्तथैव ॥४७॥
स्वर्गाय युष्माकमयं तु धर्मो ममाभिला[1]षस्त्वपुनर्भवाय ।
अस्मिन् वने येन न मे विवत्सा भिन्नः प्रवृत्त्या हि निवृत्तिधर्मः ॥४८॥
तन्नारतिर्मे न परापचारो वनादितो येन परिव्रजामि ।
धर्मे स्थिताः पूर्वयुगानुरूपे सर्वे भवंतो हि महर्षिकल्पाः ॥४९॥
ततो वचः सूनृतमर्थवच्च सुश्लक्ष्णमोजस्वि च गर्वितं च ।
श्रुत्वा कुमारस्य तपस्विनस्ते विशेषयुक्तं बहुमानमीयुः ॥५०॥
कश्चिद्द्विजस्तत्र तु भस्मशायी प्रांशुः शिखी दारवचीरवासाः ।
आपिंगलाक्षस्तनुदीर्घघोणः [2]कुंडोदहस्तो [3]गिरमित्युवाच ॥५१॥
धीमन्नुदारः खलु निश्चयस्ते यस्त्वं युवा जन्मनि दृष्टदोषः ।
स्वर्गापवर्गौ हि विचार्य सम्यग्यस्यापवर्गे मतिरस्ति सोऽस्ति[4] ॥५२॥
यज्ञैस्तपोभिर्नियमैश्च तैस्तैः स्वर्गं यियासंति[5] हि रागवंतः ।
रागेण[6] सार्धं रिपुणेव युद्ध्वा मोक्षं परीप्संति तु[7] सत्त्ववंतः ॥५३॥
तद्बुद्धिरेषा यदि निश्चिता ते[8] तूर्णं भवान् गच्छतु विंध्यकोष्ठं ।
असौ मुनिस्तत्र वसत्यराडो यो नैष्ठिके श्रेयसि लब्धचक्षुः ॥५४॥
तस्माद्भवाञ्छ्रोष्यति तत्त्वमार्गं सत्यां रुचौ संप्रतिपत्स्यते च ।

[1] °लापः P [2] Ex conj कुंडिवहस्तो C कुंडोवहस्तो P [3] गिरिम् C P
[4] स्वस्ति P [5] यियास्संति C P [6] रागेन C [7] हि P
[8] निश्चितास्ते C

यथा तु[1] पश्यामि मतिस्तवैषा तस्यापि यास्यत्यवधूय बुद्धिं ॥५५॥
पुष्टाश्वघोणं विपुलायताक्षं ताम्राधरोष्ठं सिततीक्ष्णदंष्ट्रं ।
इदं हि वक्त्रं तनुरक्तजिह्वं[2] ज्ञेयार्णवं [3]पास्यति कृत्स्नमेव ॥५६॥
गंभीरता या भवतस्त्वगाधा या दीप्तता यानि च लक्षणानि ।
आचार्यकं प्राप्स्यति तत्पृथिव्यां यन्नर्षिभिः पूर्वयुगेऽप्यवाप्तं ॥५७॥
परममिति ततो नृपात्मजस्तमृषिजनं प्रतिनंद्य निर्ययौ ।
विधिवदनुविधाय तेऽपि तं प्रविविशुराश्रमिणस्तपोवनं ॥५८॥

इति श्रीबुद्धचरिते महाकाव्ये तपोवनप्रवेशो नाम
सप्तमः सर्गः ॥७॥

[1] यथानु P. [2] °जिह्मं C [3] या° C P

# BOOK VIII.

ततस्तुरंगावचरः स दुर्मनास्तथा वनं भर्तरि निर्ममे गते ।
चकार यत्नं पथि शोकविग्रहे तथापि चैवाश्रु न तस्य चिक्षिपे ॥१॥
यमेकरात्रेण तु भर्तुराज्ञया जगाम मार्गं सह तेन वाजिना ।
इयाय भर्तुर्विरहं विचिंतयंस्तमेव पंथानमहोभिरष्टभिः ॥२॥
हयश्च[1] सौजस्वि[2] चचार कंथकस्[3]तताम भावेन बभूव निर्मदः ।
अलंकृतश्चापि तथैव भूषणैरभूद्गतश्रीरिव तेन वर्जितः ॥३॥
निवृत्य चैवाभिमुखस्[4]तपोवनं भृशं जिहेषे करुणं मुहुर्मुहुः ।
क्षुधान्वितोऽप्यध्वनि शष्पमंबु वा यथा[5]पुरा नाभिननंद नाददे ॥४॥
ततो विहीनं कपिलाह्वयं पुरं महात्मना तेन जगद्धितात्मना ।
क्रमेण तौ शून्यमिवोपजग्मतुर्दिवाकरेणेव विनाकृतं नभः ॥५॥
सपुंडरीकैरपि शोभितं जलैरलंकृतं पुष्पधरैर्नगैरपि[6] ।
तदेव तस्योपवनं वनोपमं गतप्रहर्षैर्न रराज नागरैः ॥६॥
ततो भ्रमद्भिर्दिशि दीनमानसैरनुज्ज्वलै[7]र्बाष्पहतेक्षणैर्नरैः ।
[8]निवार्यमाणाविव तावुभौ पुरं शनैरजःस्नातमिवाभिजग्मतुः ॥७॥
निशम्य च [9]स्रस्तशरीरगामिनौ विनागतौ शाक्यकुलर्षभेण[10] तौ ।

[1] हयस्य C sec. m.  [2] Sic C; स्वौजस्वि P  [3] कंठकः P  [4] अभिमुखंस्तपो° C.  [5] Ex conj. पुराभिन्नं ननंद C P  [6] नगैरिव C, but corrected in margin  [7] अनुज्वरैः P  [8] निवार्यमाना° C P  [9] स्रष्ट° C  [10] °न C P

मुमोच वाष्पं पथि नागरो जनः पुरा रथे दाशरथेरिवागते ॥८॥
अथ ब्रुवंतः समुपेतमंयवो जनाः पथि च्छंदकमागताश्रवः[1] ।
क्व राजपुत्रः कुलराष्ट्रवर्धनो[2] हृतस्त्वयासाविति पृष्ठतोऽन्वयुः ॥९॥
ततः स तान् भक्तिमतोऽब्रवीज्जनान्नरेंद्रपुत्रं न परित्यजाम्यहं ।
रुदन्नहं तेन तु निर्जने वने गृहस्थवेशश्च विसर्जिताविति ॥१०॥
इदं वचस्तस्य निशम्य ते जनाः सुदुष्करं खल्विति निश्चयं ययुः ।
पतद्विजहुः सलिलं न नेत्रजं मनो निनिंदुश्च फलार्थमात्मनः ॥११॥
अथोचुरद्यैव विशाम तद्वनं गतः स यत्र द्विपराजविक्रमः ।
जिजीविषा नास्ति हि तेन नो विना यथेंद्रियाणां[3] विगमे
शरीरिणां ॥१२॥
इदं पुरं तेन विवर्जितं वनं वनं च तत्तेन समन्वितं पुरं ।
न शोभते तेन हि नो विना पुरं मरुत्वता वृत्रवधे यथा दिवं ॥१३॥
पुनः कुमारो विनिवृत्त इत्यथो गवाक्षमालाः प्रतिपेदिरेऽंगनाः ।
विविक्तपृष्ठं च निशम्य वाजिनं पुनर्गवाक्षाणि पिधाय चुक्रुशुः ॥१४॥
प्रविष्टदीक्षस्तु सुतोपलब्धये व्रतेन शोकेन च खिन्नमानसः ।
जजाप देवायतने नराधिपश्चकार तास्ताश्च यथाश्रयाः क्रियाः ॥१५॥
ततः स वाष्पप्रति[4]पूर्णलोचनस्तुरंगमादाय तुरंगमानसः ।
विवेश शोकाभिहतो नृपालयं क्षयं विनीते रिपुणेव भर्तरि ॥१६॥
विगाहमानश्च नरेंद्रमंदिरं विलोकयन्नश्रुवहेन चक्षुषा ।
स्वरेण पुष्टेन रुराव कंथको[5] जनाय दुःखं प्रतिवेदयन्निव[6] ॥१७॥

[1] आगतास्रवः C P [2] पुरराष्ट्रनंदनो C [3] °ना C [4] परि° C (corrected in C) [5] कठको P [6] °यन्ति च C

ततः खगाश्च [1]क्षयमध्यगोचराः समीपवद्धास्तुरगाश्च सत्कृताः ।
हयस्य तस्य प्रतिसस्वनुः स्वनं नरेंद्रसूनोरुपयानशंकिताः ॥१८॥
जनाश्च हर्षातिशयेन वंचिता जनाधिपांतःपुरसंनिकर्षगाः[2] ।
यथा हयः [4]कंठक एष हेषते ध्रुवं कुमारो विशतीति मेनिरे ॥१९॥
अतिप्रहर्षादथ शोकमूर्छिताः कुमारसंदर्शनलोललोचनाः ।
गृहाद्विनिश्चक्रमुराशया स्त्रियः[3] शरत्पयोदादिव विद्युतश्चलाः ॥२०॥
विलंबवेश्यो मलिनांशुकांबरा निरंजनैर्बाष्पहतेक्षणैर्मुखैः ।
कृष्णा विवर्णांजनया[1] विनाकृता दिवीव तारा रजनीक्षया-
रुणाः[5] ॥२१॥
[6]अरक्ततामैश्चरणैरनूपुरैरकुंडलैरार्जवकर्णिकैर्मुखैः ।
स्वभावपीनैर्जघनैरमेखलैरहारयोक्त्रैर्मुषितैरिव स्तनैः ॥२२॥
निरीक्षिता[7] वाष्पपरीतलोचनं[8] निराश्रयं छंदकमश्वमेव च ।
[9]विवर्णवक्त्रा रुरुदुर्वरांगना[10] वनांतरे गाव इवर्षभोज्झिताः ॥२३॥
ततः सवाष्पा महिषी महीपतेः प्रनं[11]ष्टवत्सा महिषीव वत्सला ।
प्रगृह्य बाहू निपपात गौतमी विलोलपर्णा कदलीव कांचनी ॥२४॥
हतत्विषोऽन्याः शिथिलात्मबाहवः स्त्रियो विषादेन विचेतना इव ।
न चुक्रुशुर्नाश्रु जहुर्न [12]शश्वसुर्न चेतना उल्लिखिता इव स्थिताः ॥२५॥
अधीरमन्याः पतिशोकमूर्छिता विलोचनप्र[13]स्रवणैर्मुखैः स्त्रियः ।

[1] गृह written in C over चय  [2] °संनिकर्षाः C P, corrected in C to °कर्षगाः
[3] आशयस्त्रियः P  [4] Sic C P  [5] C P omit :  [6] अलक्त° P  [7] Sic C P. Query निरीक्ष्य ता?  [8] Ex conj °न C, °ना P  [9] Ex conj विषर्ण° C, विषस्स° P  [10] °णा C  [11] °ण° C P  [12] Ex conj शश्वन्न चेलरा सूल्लिखिता C शश्वन्न चेतना सूल्लिखिता P  [13] °प्रश्रवनैः C

[1]सिसिंचिरे प्रोषितचंदनान्[2] स्तनान् धराधरः [3]प्रस्रवणैरिवोप-
लान् ॥२६॥
मुखैश्च तासां नयनांबुताडितैः रराज तद्राजनिवेशनं तदा ।
नवांबुकालेऽंबुदवृष्टिताडितैः [4]स्रवज्जलैस्तामरसैर्यथा सरः ॥२७॥
सुवृत्तपीनांगुलिभिर्निरंतरैरभूषणैर्गूढशिरैर्वरांगनाः[5] ।
उरांसि जघ्नुः कमलोपमैः करैः स्वपल्लवैर्वातचला लता इव ॥२८॥
करप्रहारप्रचलैश्च ता बभुर्यथापि नार्यः सहितोन्नतैः स्तनैः ।
वनानिलाघूर्णितपद्मकंपितैः रथांगनाम्नां मिथुनैरिवापगाः ॥२९॥
यथा च वक्षांसि करैरपीडयंस्तथैव वक्षोभिरपीडयन् करान् ।
अकारयंस्तत्र परस्परं व्यथाः कराग्रवक्षांस्यबला दयालसाः ॥३०॥
ततस्तु रोषप्रविरक्तलोचना विषादसंबंधकषायगद्गदं ।
उवाच [6]निःश्वासचलत्पयोधरा विगाधशोकाश्रुधरा यशोधरा ॥३१॥
निशि प्रसुप्तामवशां[7] विहाय मां गतः क्व स च्छंदक मन्मनोरथः ।
उपागते च त्वयि [8]कंथके च मे समं गतेषु त्रिषु कंपते मनः ॥३२॥
अनार्यमस्निग्धममित्रकर्म मे नृशंस कृत्वा किमिहाद्य रोदिषि ।
[9]नियच्छ वाष्पं भव तुष्टमानसो न [10]संवदत्यश्रु च तच्च कर्म ते ॥३३॥
प्रियेण[11] वश्येन हितेन साधुना त्वया सहायेन यथार्थकारिणा ।
[12]गतोऽर्यपुत्रो ह्यपुनर्निवृत्तये रमस्व दिष्ट्या सफलः श्रमस्तव ॥३४॥
वरं मनुष्यस्य विचक्षणो रिपुर्न मित्रमप्राज्ञमयोगपेशलं ।

[1] Sic C P [2] °चंदनास्तनान् C [3] °स्रवणैः C P [4] स्रव° C
[5] °णाः C P [6] निश्वास° C P [7] स्रवसां C [8] कठके P [9] निगच्छ C.
[10] Ex conj सस्वद° C P [11] प्रियेन C [12] गतार्यपुत्रो P

सुहृद्भुवेण ह्यविपश्चिता त्वया कृतः कुलस्यास्य महानुपप्लवः ॥३५॥
इमा हि शोच्या व्यवमुक्तभूषणाः [1]प्रसक्तवाष्पाविलरक्तलोचनाः।
स्थितेऽपि पत्यौ हिमवन्महीसमे प्रन[2]ष्टशोभा विधवा इव स्त्रियः॥३६॥
इमाश्च विक्षिप्तविटंकबाहवः प्रसक्तपारावतदीर्घनिस्वनाः।
विनाकृतास्तेन सहैव रोधनैर्भृशं रुदंतीव विमानपंक्तयः ॥३७॥
अनर्थकामोऽस्य जनस्य सर्वथा तुरंगमोऽपि ध्रुवमेष[3] कंथकः[?]।
जहार सर्वस्वमितस्तथा हि मे जने प्रसुप्ते निशि रत्नचौरवत् ॥३८॥
यदा समर्थः खलु सोढुमागतानिषुप्रहारानपि किं पुनः कशाः।
गतः कशापातभयात् कथं त्वयं[4] श्रियं गृहीत्वा हृदयं च मे समं॥३९॥
अनार्यकर्मा[5] भृशमद्य हेषते नरेंद्रधिष्ण्यं प्रतिपूरयन्निव।
यदा तु निर्वाहयति स्म मे प्रियं तदा हि मूकस्तुरगाधमो
ऽभवत्[6] ॥४०॥
यदि ह्यहेषिष्यत बोधयञ्जनं खुरैः क्षितौ वाप्यकरिष्यत[7] ध्वनिं।
हनुस्वनं वाजनयिष्यदुत्तमं न चाभविष्यन्मम दुःखमीदृशं ॥४१॥
इतीह देव्याः परिदेविताश्रयं[8] निशम्य वाष्पग्रथिताक्षरं वचः।
अधोमुखः साश्रुकलः कृतांजलिः शनैरिदं छंदक उत्तरं जगौ॥४२॥
विगर्हितुं नार्हसि देवि कंथकं[9] न चापि रोषं मयि कर्तुमर्हसि।
अनागसौ स्वः[10] समवेहि सर्वशो गतो नृदेवः स हि देवि देववत्॥४३॥
अहं हि जानन्नपि राजशासनं [11]बलात्कृतः कैरपि [12]दैवतैरिव।

[1] प्रशान्त° C P [2] °ण° C P [3] एव P [4] त्वया P [5] Ex conj अनार्यकं मा C P [6] तुरगाधमाभवः P [7] अकरिष्यता C P [8] परिदेवता° C [9] कंठ° P [10] स्वः C P [11] चलात्कतः P [12] देव° C

उपानयं तूर्णमिमं तुरंगमं [1]तथान्वगच्छं विगतश्रमो ऽध्वनि ॥४४॥
व्रजन्नयं वाजिवरो ऽपि नास्पृशन्महीं खुराग्रैर्विधृतैरिवांतरा ।
तथैव. दैवादिव संयताननो हनुस्वनं नाकृत नाप्यहेषत ॥४५॥
यदा वहिर्गच्छति पार्थिवात्मजस्तदाभवद्द्वारमपावृतं स्वयं ।
तमश्च नैशं रविणेव पाटितं ततो ऽपि दैवो विधिरेष गृह्यतां ॥४६॥
यदाप्रमत्तो ऽपि नरेंद्रशासनाद्गृहे पुरे चैव सहस्रशो जनः ।
तदा स नाबुध्यत निद्रया हृतस्ततो ऽपि दैवो विधिरेष[2] गृह्यतां ॥४७॥
यतश्च वासो वनवाससंमतं [3]विसृष्टमस्मै समये दिवौकसा ।
दिवि प्रविद्धं मुकुटं च तद्धृतं ततो ऽपि दैवो विधिरेष[2] गृह्यतां ॥४८॥
तदेवमावां नरदेवि दोषतो न तत्प्रयातं[4] प्रतिगंतुमर्हसि ।
न कामकारो मम नास्य वाजिनः कृतानुयात्रः स हि दैवतैर्गतः ॥४९॥
इति प्रयाणं बहुधैवमद्भुतं निशम्य तास्तस्य महात्मनः स्त्रियः ।
[5]प्रनष्टशोका इव विस्मयं ययुर्मनोज्वरं प्रव्रजनात्तु लेभिरे ॥५०॥
विषादपारिप्लवलोचना ततः प्रनष्टपोता कुररीव दुःखिता ।
विहाय धैर्यं विरुराव गौतमी तताम चैवाश्रुमुखी जगाद च ॥५१॥
महोर्मिमंतो मृदवो ऽसिताः शुभाः पृथक्पृथग्मूलरुहाः समुद्गताः ।
[6]प्रचेरितास्ते भुवि तस्य मूर्धजा नरेंद्रमौलीपरिवेष्टनक्षमाः[7] ॥५२॥
प्रलंबबाहुर्मृगराजविक्रमो महर्षभाक्षः कनकोज्ज्वलद्युतिः ।
विशालवक्षा घनदुंदुभिस्वनस्तथाविधोऽप्याश्रमवासमर्हति ॥५३॥

[1] तथान्वगच्छन्विगत० P तथानुगच्छन्वि० C [2] एव P [3] निःसृष्टं C
[4] ०ति C [5] ०णा० C P [6] Sic MSS (cf. viii. 7). The Mahâbh. has *pracerita* (*pra+ā+irita*) [7] ०परिवेष्यमक्षमाः C

अभागिनी नूनमियं वसुंधरा तमार्यकर्माणमनुत्तमं प्रति[1] ।
गतस्ततोऽसौ गुणवान् हि तादृशो नृपः प्रजाभाग्यगुणैः
प्रसूयते ॥५४॥
सुजातजालावततांगुली मृदू निगूढगुल्फौ विषपुष्पकोमलौ ।
वनांतभूमिं[2] कठिनां कथं नु तौ[3] सचक्रमध्यौ चरणौ गमिष्यतः॥५५॥
विमानपृष्ठे शयनासनोचितं महार्हवस्त्रागुरुचंदनार्चितं ।
कथं नु शीतोष्णजलागमेषु तच्छरीरमोजस्वि वने भविष्यति॥५६॥
कुलेन सत्त्वेन बलेन वर्चसा श्रुतेन लक्ष्म्या वयसा च गर्वितः ।
प्रदातुमेवाभ्युदितो न याचितुं कथं स भिक्षां परतश्चरिष्यति॥५७॥
शुचौ शयित्वा शयने हिरण्मये प्रबोध्यमानो निशि तूर्यनिस्वनैः ।
कथं वत स्वप्स्यति सोऽद्य मे[4] व्रती पटैकदेशांतरिते महीतले॥५८॥
इमं विलापं करुणं निशम्य ता भुजैः परिष्वज्य परस्परं स्त्रियः ।
विलोचनेभ्यः सलिलानि तत्यजुर्मधूनि पुष्पेभ्य इवेरिता
लताः ॥५९॥
ततो धरायामपतद्यशोधरा विचक्रवाकेव रथांगसाह्वया ।
शनैश्च तत्तद्विललाप विक्लवा मुहुर्मुहुर्गद्गदरुद्धया गिरा ॥६०॥
स मामनाथां [5]सहधर्मचारिणीमपास्य धर्मं यदि कर्तुमिच्छति ।
कुतोऽस्य धर्मः सहधर्मचारिणीं विना तपो यः परिभोक्तुमि-
च्छति ॥६१॥
शृणोति नूनं स न पूर्वपार्थिवान् महासुदर्शप्रभृतीन् पितामहान् ।

[1] Ex conj पतिं C, पति P  [2] कथिनां C  [3] Ex conj भौ C P
[4] मा P  [5] सहधार्म° C.

वनानि पत्नीसहितानुपेयुषस्तथा स धर्मं मदृते चिकीर्षति ॥६२॥
मखेषु वा वेदविधानसंस्कृतौ न दंपती पश्यति दीक्षितावुभौ ।
समं[1] बुभुक्षू परतोऽपि तत्फलं ततोऽस्य जातो मयि धर्ममत्सरः ॥६३॥
ध्रुवं स जानन् मम धर्मवल्लभो[2] मनः प्रियेऽप्याकलहं मुहुर्मिथः ।
सुखं विभीर्मामपहाय[3] रोषणां महेंद्रलोकेऽप्सरसो जिघृक्षति ॥६४॥
इयं तु चिंता मम कीदृशं नु ता वपुर्गुणं बिभ्रति तत्र योषितः ।
वने यदर्थं स तपांसि तप्यते श्रियं च हित्वा मम भक्तिमेव च ॥६५॥
न खल्वियं स्वर्गसुखाय मे स्पृहा न तज्जनस्यात्मवतोऽपि दुर्लभं[1] ।
स तु प्रियो मामिह वा परत्र वा कथं न जह्यादिति मे मनोरथः ॥६६॥
अभागिनी यद्यहमायतेक्षणं शुचिस्मितं भर्तुरुदीक्षितुं मुखं ।
न मंदभाग्योऽर्हति राहुलोऽप्ययं कदाचिदंके परिवर्तितुं पितुः ॥६७॥
अहो नृशंसं सुकुमारवर्चसः[5] सुदारुणं तस्य मनस्विनो मनः ।
कलप्रलापं द्विषतोऽपि हर्षणं शिशुं सुतं यस्त्यजतीदृशं स्वतः ॥६८॥
ममापि कामं हृदयं सुदारुणं शिलामयं वाप्ययसापि वा कृतं ।
अनाथवच्छ्रीरहिते सुखोचिते वनं गते भर्तरि यन्न दीर्यते ॥६९॥
इतीह देवी पतिशोकमूर्छिता रुरोद दध्यौ विललाप चासकृत् ।
स्वभावधीरापि हि सा सती शुचा धृतिं न सस्मार चकार नो
ह्रियं ॥७०॥
ततस्तथा शोकविलापविक्लवां यशोधरां प्रेक्ष्य वसुंधरागतां ।
महारविंदैरिव वृष्टिताडितैर्मुखैः सबाष्पैर्वनिता विचुक्रुशुः ॥७१॥

[1] Ex conj. बुभुक्षुः परितोऽपि C P. The Chinese supports *paratah*. [2] ॰भ॰ (॰वत्सलो C pr. manu, but not D.) [3] उपहाय P. [4] दुर्लभ C P. [5] ॰वर्चस. C P.

[1]समाप्तजाप्यः कृतहोममंगलो नृपस्तु देवायतनाद्विनिर्ययौ ।
जनस्य तेनार्त्तरवेण[2] चाहतश्चचाल वज्रध्वनिनेव वारणः ॥७२॥
निशाम्य[3] च छंदककंथ[4]कावुभौ सुतस्य संश्रुत्य च निश्चयं स्थिरं ।
पपात शोकाभिहतो महीपतिः शचीपतेर्वृत्त इवोत्सवे ध्वजः ॥७३॥
ततो मुहूर्तं सुतशोकमोहितो[5] जनेन तुल्याभिजनेन धारितः ।
निरीक्ष्य दृष्ट्या जलपूर्णया हयं महीतलस्थो विललाप पा-
    र्थिवः ॥७४॥
बहूनि कृत्वा समरे प्रियाणि मे महत्त्वया कंथक[6] विप्रियं कृतं ।
गुणप्रियो येन वने स[7] मे प्रियः प्रियोऽपि सन्नप्रियवत् प्रचे-
    रितः[8] ॥७५॥
तदद्य मां वा नय तत्र यत्र स व्रज द्रुतं वा पुनरेवमानय ।
ऋते हि तस्मान्मम नास्ति जीवितं [9]विगाढरोगस्य सदौषधा-
    दिव ॥७६॥
सुवर्णनिष्ठीविनि मृत्युना हृते सुदुष्करं यन्न ममार [10]सृंजयः ।
अहं पुनर्धर्मरतौ सुते गतेऽमुमुक्षुरात्मानमनात्मवानिव ॥७७॥
विभोर्दशक्षत्रकृतः प्रजापतेः परापरज्ञस्य विवस्वदात्मनः ।
प्रियेण पुत्रेण सता विनाकृतं कथं न मुह्येद्धि[11] मनो मनोरपि ॥७८॥
अजस्य राज्ञस्तनयाय धीमते नराधिपायेंद्रसखाय मे स्पृहा ।
गते वनं यस्तनये दिवं गतो न मोघवाष्पः कृपणं[12] जिजीव ह ॥७९॥

[1] समाप्य° C  [2] °न P  [3] So C P here and v 3  [4] °कठक° P
[5] °शोकमोहमोहितो P  °शोकमूर्छिमोहितो C with the मूर्छि dotted above
[6] Sic C P  [7] Ex conj वनेष P, चनेष C  [8] Sic MSS cf sup 52
[9] विगाध° C P  [10] Ex conj संजयः C P  [11] मुह्येद्वि C  [12] °नं C.

प्रचक्ष्व मे भद्र [1] तदाश्रमाजिरं हृतस्त्वया यत्र स मे जलांजलिः ।
इमे परीप्संति हि ते पिपासवो ममासवः प्रेतगतिं यियासवः ॥८०॥

इति तनयवियोगजातदुःखं क्षितिसदृशं सहजं विहाय धैर्यं ।
दशरथ इव रामशोकवश्यो बहु विललाप नृपो विसंज्ञकल्पः ॥८१॥

श्रुतविनयगुणान्वितस्ततस्तं मतिसचिवः प्रवयाः पुरोहितश्च ।
अवधृतमिदमूचतुर्यथावन्न च परितप्तमुखौ न चाप्यशोकौ ॥८२॥

त्यज नरवर शोकमेहि धैर्यं कुधृतिरिवार्हसि धीर नाश्रु मोक्तुं ।
[2] स्रजमिव मृदितामपास्य लक्ष्मीं भुवि बहवो हि नृपा वनान्य-
भीयुः ॥८३॥

अपि च नियत एष तस्य भावः स्मर वचनं तदृषेः पुरासितस्य ।
न हि स दिवि न चक्रवर्तिराज्ये क्षणमपि वासयितुं सुखेन
शक्यः ॥८४॥

यदि तु नृवर कार्य एव यत्नस्त्वरितमुदाहर यावदत्र यावः ।
बहुविधमिह युद्धमस्तु तावत्तव तनयस्य विधेश्च तस्य तस्य ॥८५॥

नरपतिरपि तौ शशास तस्माद्द्रुतमित एव युवामभिप्रयातं ।
न हि मम हृदयं प्रयाति [3] शांतिं वनशकुनेरिव पुत्रलालसस्य ॥८६॥

परममिति नरेंद्रशासनात्तौ ययतुरमात्यपुरोहितौ वनं तत् ।
कृतमिति सवधूजनः सदारो नृपतिरपि प्रचकार शेषकार्यं ॥८७॥

इति श्रीबुद्धचरिते महाकाव्येऽतःपुरविलापो नामाष्टमः
सर्गः ॥८॥

[1] तम् P     [2] श्रज ।     [3] प्रयाति ।

# BOOK IX[1]

ततस्तदा मंत्रिपुरोहितौ तौ वाष्पप्रतोदाभिहतौ नृपेण[2] ।
विद्धौ सदश्वाविव सर्वयत्नात्सौहार्दशीघ्रं ययतुर्वनं तत् ॥१॥
तमाश्रमं जातपरिश्रमौ तावुपेत्य काले सदृशानुयात्रौ ।
राजर्द्धिमुत्सृज्य विनीतचेष्टा[3]वुपेयतुर्भार्गवधिष्ण्यमेव[4] ॥२॥
तौ न्यायतस्तं प्रतिपूज्य विप्रं तेनार्चितौ तावपि चानुरूपं ।
कृतासनौ भार्गवमासनस्थं छित्त्वा कथामूचतुरात्मकृत्यं ॥३॥
शुद्धौजसः शुद्धविशालकीर्तेरिक्ष्वाकुवंशप्रभवस्य राज्ञः ।
इमं जनं वेत्तु भवानधीरं श्रुतग्रहे मंत्रपरिग्रहे च ॥४॥
तस्येंद्रकल्पस्य जयंतकल्पः पुत्रो [5]जरामृत्युभयं तितीर्षुः ।
इहाभ्युपेतः किल[6] तस्य हेतोरावामुपेतौ भगवानवैतु ॥५॥
तौ सोऽब्रवीदस्ति स दीर्घबाहुः प्राप्तः कुमारो न तु [7]नावबुद्धः ।
धर्मोऽयमावर्तक इत्यवेत्य यातस्त्वराडाभिमुखो मुमुक्षुः ॥६॥
[8]तस्मात्ततस्तावुपलभ्य तत्त्वं तं विप्रमामंत्र्य तदैव सद्यः ।
खिन्नावखिन्नाविव राजपुत्रः [9]प्रसस्रतुस्तेन [10]यतः स यातः ॥७॥
[11]यांतौ ततस्तौ [12]सृजया विहीनमपश्यतां तं वपुषा ज्वलंतं ।

[1] This book has several lacunae. [2] °न C. [3] °वेष्टौ C. [4] धिच्च्यमेव P. [5] जराजन्म° P. [6] Ex conj.; कल्लि C P. [The Tibetan has *grag*, 'it is reported,' H W.] [7] चाव° P. [8] तस्मादनस्तौ P. [9] प्रसस्रतुः C P. [10] यतुः स यात्र: C pr. man. [11] यान्मै C. [12] Sic C P. Query स्रजया?

[1]नृपोपविष्टं पथि वृक्षमूले [2]सूर्यं घनाभोगमिव प्रविष्टं ॥८॥
यानं विहायोपययौ ततस्तं पुरोहितो मंत्रधरेण सार्धं ।
यथा वनस्थं सहवामदेवो रामं दिदृक्षुर्मुनिरौर्वशेयः[3] ॥९॥
तावर्चयामासतुरर्हतस्तं[4] दिवीव शुक्रांगिरसौ महेंद्रं ।
प्रत्यर्चयामास स चार्हतस्तौ दिवीव शुक्रांगिरसौ महेंद्रः ॥१०॥
कृताभ्यनुज्ञावभितस्ततस्तौ निषीदतुः शाक्यकुलध्वजस्य ।
विरेजतुस्तस्य च संनिकर्षे पुनर्वसू योगगताविवेंदोः ॥११॥
तं वृक्षमूलस्थमभिज्वलंतं पुरोहितो राजसुतं बभाषे ।
यथोपविष्टं दिवि पारिजाते[5] बृहस्पतिः शक्रसुतं जयंतं ॥१२॥
त्वच्छोकशल्ये हृदयावगाढे[6] मोहं गतो भूमितले मुहूर्तं ।
कुमार राजा नयनांबुवर्षो यत्त्वामवोचत्तदिदं निबोध[7] ॥१३॥
जानामि धर्मं प्रति निश्चयं ते परैमि [8]तेऽच्याविनमेतमर्थं ।
अहं त्वकाले वनसंश्रयात्ते शोकाग्निनाग्निप्रतिमेन दह्ये ॥१४॥
तदेहि धर्मप्रिय मत्प्रियार्थं धर्मार्थमेव त्यज बुद्धिमेतां ।
अयं हि मा[9] शोकरयः प्रवृद्धो नदीरयः कूलमिवाभिहंति ॥१५॥
मेघांबुकक्षाद्रिषु या हि वृत्तिः[10] समीरणार्काग्निमहाशनीनां ।
तां [11]वृत्तिमस्मासु करोति शोको विकर्षणोच्छोषणदाहभेदैः ॥१६॥
तद्भुंक्ष्व तावद्वसुधाधिपत्यं काले वनं यास्यसि शास्त्रदृष्टे ।

[1] Ex conj नृपोववविष्ट C P [2] Ex conj सर्यःघना° C P [3] °सेयः C P
[4] अर्हतौ तं P [5] परिजातौ C [6] °धे P [7] °धः C [8] Ex conj
तेवाविनिमेत° C P [9] मे P [10] Ex conj वृद्धिः C P [11] वृद्धिम् P,
वृत्तम् C

L III 7

अनिष्टबंधौ कुरु माप्युपेक्षां[1] सर्वेषु भूतेषु दया हि धर्मः ॥१७॥
न चैष धर्मो वन एव सिद्धः पुरेऽपि सिद्धिर्नियता यतीनां ।
बुद्धिश्च यत्नश्च निमित्तमत्र वनं च लिंगं च[2] हि भीरुचिह्नं ॥१८॥
मौलीधरैरंसविषक्तहारैः[3] केयूरविष्टब्धसजैर्नरेंद्रैः ।
लक्ष्म्यंकमध्ये परिवर्तमानैः प्राप्तो गृहस्थैरपि मोक्षधर्मः ॥१९॥
ध्रुवानुजौ यौ[4] बलिवज्रबाहू वैभ्राजमाषाढमथांतिदेवं ।
विदेहराजं जनकं तथैव [5]पाकद्रुमं सेनजितश्च राज्ञः ॥२०॥
एतान् गृहस्थान् नृपतीनवेहि नैःश्रेयसे धर्मविधौ विनीतान् ।
उभेऽपि[6] तस्माद्युगपद्भजस्व चित्ताधिपत्यं च नृपश्रियं च ॥२१॥
इच्छामि हि त्वामुपगुह्य गाढं कृताभिषेकं सलिलार्द्रमेव ।
धृतातपत्रं समुदीक्षमाणस्[7]तेनैव हर्षेण वनं प्रवेष्टुं ॥२२॥
इत्यब्रवीद्भूमिपतिर्भवंतं वाक्येन वाष्पग्रथिताक्षरेण ।
श्रुत्वा भवानर्हति तत्प्रियार्थं स्नेहेन तत्स्नेहमनुप्रयातुं ॥२३॥
शोकांभसि त्वत्प्रभवे ह्यगाधे[8] दुःखार्णवे मज्जति शाक्यराजः ।
[9]तस्मात्तमुत्तारय नाथहीनं निराश्रयं मग्नमिवार्णवे गां[10] ॥२४॥
भीष्मेण गंगोदरसंभवेन रामेण रामेण च भार्गवेण[11] ।
श्रुत्वा कृतं कर्म पितुः प्रियार्थं पितुस्त्वमप्यर्हसि कर्तुमिष्टं ॥२५॥
संवर्धयित्रीं च समेहि देवीमगस्त्यजुष्टां दिशमप्रयातां ।

[1] माप्युपेक्षा C  [2] व C P  [3] अंशविशक्त° C P (P has अंसु°)
[4] Ex conj. ध्रुवा - जौर्यौ C P, with hiatus marked.  [5] Ex conj. या - द्रुमसे° C
या - द्रुमं से° P with hiatus marked.  [6] Sic C P!  [7] °क्ष्यमानः C, °क्ष्यमाणः P
[8] °ढे P  [9] तस्मात्त्वम् P  [10] गौः C  [11] °न P

प्रनष्टवत्सामिव[1] वत्सलां गामजस्रमार्त्तां कलितुं[2] न चार्हसि ॥२६॥
हंसेन हंसीमिव विप्रयुक्तां त्यक्तां गजेनेव वने करेणुं ।
आर्त्तां सनाथामपि नाथहीनां त्रातुं वधूमर्हसि दर्शनेन ॥२७॥
एकं सुतं बालमनर्हदुःखं संतापसंतप्त[3] * * ।
तं राहुलं मोक्षय बंधुशोकाद्राहूपसर्गादिव पूर्णचंद्रं ॥२८॥
शोकाग्निना त्वद्विरहेंधनेन [4]निःश्वासधूमेन तमःशिखेन ।
त्वद्दर्शनायं[5]र्छति दह्यमानः[6] सोंऽतःपुरं चैव पुरं च कृत्स्नं ॥२९॥
स बोधिसत्त्वः परिपूर्णसत्त्वः श्रुत्वा वचस्तस्य पुरोहितस्य ।
ध्यात्वा मुहूर्तं गुणवद्गुणज्ञः प्रत्युत्तरं प्रश्रितमित्युवाच ॥३०॥
अवैमि भावं तनयप्रसक्तं[7] विशेषतो यो मयि भूमिपस्य[8] ।
जानन्नपि व्याधिजराविपद्भ्यो भीतस्त्वगत्या स्वजनं त्यजामि ॥३१॥
द्रष्टुं प्रियं कः स्वजनं हि नेच्छेन्नासौ यदि स्यात्प्रियविप्रयोगः ।
यदा तु भूत्वापि [9]भवेद्वियोगस्ततो गुरु[10] स्निग्धमपि त्यजामि ॥३२॥
मद्धेतुकं यत्तु नराधिपस्य शोकं [11]भवानर्हति न प्रियं मे ।
यत्स्वप्नभूतेषु समागमेषु संतप्यते भाविनि विप्रयोगैः ॥३३॥
एवं च ते निश्चयमेतु बुद्धिर्दृष्ट्वा [12]विचित्रं विविधप्रचारं ।
संतापहेतुर्न सुतो न बंधुरज्ञाननैमित्तिक एष तापः ॥३४॥

[1] °णा° C P [2] Glossed in C as त्यक्तु? [3] A hiatus here in C P. C gives only संतापसंत. The तं of c not in C. [4] निश्वास° C P [5] A blank in the MSS between °ना and च्छति [6] The MSS have a blank between °मान and पुरं चैव. [7] Ex conj. The MSS read तनयं with a blank after it [8] Ex conj. भूमिपस्व C P [9] Ex conj. भूत्वापि ---- योग° C P [10] गुरु C P [11] Ex conj. भवानार्हति P, भवानार्हसि C [12] So P (perhaps प्रवार) विचि ----- प्रचार C

यदाध्वगानामिव संगतानां काले वियोगो नियतः प्रजानां ।
प्राज्ञो जनः को नु भजेत[1] शोकं [2]बंधुप्रियः सन्नपि बंधुहीनः ॥३५॥
इहैति हित्वा स्वजनं परत्र प्रलभ्य चेहापि पुनः प्रयाति ।
गत्वापि तत्राप्यपरत्र गच्छेत्येवं जनो योगिनि कोऽनुरोधः[3] ॥३६॥
यदा च गर्भात्प्रभृति [4]प्रजानां * * नुबधाय मृत्युः ।
कस्मादकाले वनसंश्रयं मे पुत्रप्रियस्तत्र भवानवोचत् ॥३७॥
भवत्यकालो विषयाभिपत्तौ [5]कालस्तथैवाभिविधौ प्रदिष्टः[6] ।
कालो जगत्कर्षति सर्वकालानर्चाहके श्रेयसि सर्वकालः ॥३८॥
राज्यं मुमुक्षुर्मयि यच्च राजा[7] तदप्युदारं सदृशं पितुश्च ।
[8]प्रतिग्रहीतुं मम न क्षमं तु लोभादपथ्यान्नमिवातुरस्य ॥३९॥
कथं नु[9] मोहायतनं नृपत्वं क्षमं प्रपत्तुं विदुषा नरेण ।
सोद्वेगता यत्र मदः श्रमश्च [10]परोपचारेण च धर्मपीडा ॥४०॥
जांबूनदं हर्म्यमिव प्रदीप्तं विषेण संयुक्तमिवोत्तमान्नं ।
ग्राहाकुलं च स्थि[तं][11] * * * * * ॥४१॥
इत्यात्मविज्ञानगुणानुरूपं मुक्तस्पृहं[12] हेतुमदूर्जितं च ।
श्रुत्वा नरेंद्रात्मजमुक्तवन्तं प्रत्युत्तरं मंत्रधरोऽप्युवाच ॥४२॥
यो निश्चयो मंत्रवरस्तवायं नायं न युक्तो न तु कालयुक्तः ।

[1] Ex conj भजेत्स C, भजेच्च P [2] Ex conj बंधु ------- हीनः C P
[3] Corrupt? For the Tibetan see note in Appendix. [4] C P have a hiatus after प्र down to नुबधाय [5] C P have a hiatus before स्तथैवाविधौ I conjecture *abhividhau* (cf Pân iii 3 44) [6] प्रविष्टः C P, but C has a marginal correction प्रदिष्टः
[7] Ex conj राज्ञ C? राज्य P [8] प्रतिगृहीतुं C P [9] न C P. [10] Ex conj परापचारेण C P. [11] स्ति P Here follows a long hiatus in C P It occupies 719-734 in Beal's translation [12] ०स्पृशं C

शोकाय हित्वा पितरं वयःस्थं स्याद्धर्मकामस्य हि ते न धर्मः ॥४३॥
नूनं च बुद्धिस्तव नातिसूक्ष्मा[1] धर्मार्थकामेष्वविचक्षणा वा ।
हेतोरदृष्टस्य फलस्य यस्त्वं प्रत्यक्षमर्थं परिभूय यासि ॥४४॥
पुनर्भवोऽस्तीति च केचिदाहुर्नास्तीति केचिन्नियत[2]प्रतिज्ञाः ।
एवं यदा संशयितोऽयमर्थस्तस्मात् क्षमं भोक्तुमुपस्थिता श्रीः ॥४५॥
भूयः प्रवृत्तिर्यदि काचिदस्ति रंस्यामहे तत्र यथोपपत्तौ ।
अथ प्रवृत्तिः परतो न काचित्सिद्धोऽप्रयत्नाज्जगतोऽस्य मोक्षः ॥४६॥
अस्तीति केचित्परलोकमाहुर्मोक्षस्य योगं न तु वर्णयंति ।
अग्नेर्यथा ह्युष्णमपां द्रवत्वं तद्वत्प्रवृत्तौ प्रकृतिं वदंति ॥४७॥
केचित्स्वभावादिति वर्णयंति शुभाशुभं चैव भवाभवौ[3] च ।
स्वाभाविकं सर्वमिदं च यस्मादतोऽपि मोघो भवति प्रयत्नः ॥४८॥
यदिंद्रियाणां नियतः प्रचारः प्रियाप्रियत्वं विषयेषु चैव ।
संयुज्यते यज्जरयार्त्तिभिश्च कस्तत्र यत्नो ननु स स्वभावः ॥४९॥
अद्भिर्हुताशः शममभ्युपैति तेजांसि चापो गमयंति[4] शोषं ।
भिन्नानि भूतानि शरीरसंस्थान्यैक्यं च [5]दत्त्वा जगदुद्वहंति ॥५०॥
यत्पाणिपादोदरपृष्ठमूर्ध्ना[6] निर्वर्तते गर्भगतस्य भावः ।
यदात्मनस्तस्य च तेन योगः स्वाभाविकं तत्कथयंति तज्ज्ञाः ॥५१॥
कः कंटकस्य प्रकरोति तैक्ष्ण्यं विचित्रभावं मृगपक्षिणां वा ।
स्वभावतः सर्वमिदं प्रवृत्तं न कामकारोऽस्ति कुतः प्रयत्नः ॥५२॥
सर्गं वदंतीश्वरतस्तथान्ये तत्र प्रयत्ने पुरुषस्य कोऽर्थः ।

[1] ॰सूक्ष्मा C [2] नियतः C [3] ॰भवं P [4] Ex conj. चापः शमयंति C T
[5] वदत्वा P [6] ॰मूर्द्धानिर्वर्तते P

य एव हेतुर्जगतः प्रवृत्तौ हेतुर्निवृत्तौ नियतः स एव ॥५३॥
केचिद्वदंत्यात्मनिमित्तमेव प्रादुर्भवं चैव भवक्षयं च ।
प्रादुर्भवं तु प्रवदंत्ययत्नाद्यत्नेन मोक्षाधिगमं ब्रुवंति ॥५४॥
नरः पितॄणामनृणः प्रजाभिर्वेदैर्ऋषीणां क्रतुभिः सुराणां ।
उत्पद्यते सार्धमृणैस्त्रिभिस्तैर्यस्यास्ति मोक्षः किल तस्य मोक्षः ॥५५॥
इत्येवमेतेन विधिक्रमेण मोक्षं सयत्नस्य वदंति तज्ज्ञाः ।
प्रयत्नवंतोऽपि हि विक्रमेण मुमुक्षवः खेदमवाप्नुवंति ॥५६॥
तत्सौम्य मोक्षे यदि भक्तिरस्ति न्यायेन सेवस्व विधिं यथोक्तं ।
एवं भविष्यत्युपपत्तिरस्य संतापनाशश्च नराधिपस्य ॥५७॥
या च प्रवृत्ता भवदोषबुद्धिस्तपोवनेभ्यो भवनं प्रवेष्टुं ।
तत्रापि चिंता [1]तव तात मा भूत् पूर्वेऽपि जग्मुः स्वगृहं वनेभ्यः ॥५८॥
तपोवनस्थोऽपि वृतः प्रजाभिर्जगाम राजा पुरमंबरीषः ।
तथा महीं विप्रकृतामनार्यैस्तपोवनादेत्य ररक्ष रामः ॥५९॥
तथैव [2]शाल्वाधिपतिर्द्रुमाख्यो वनात्ससूनुः स्वपुरं प्रविश्य ।
ब्रह्मर्षिभूतश्च मुनेर्वशिष्ठाद्दध्रे श्रियं सांकृतिरंतिदेवः[3] ॥६०॥
एवंविधा धर्मयशःप्रदीप्ता वनानि हित्वा भवनान्यभीयुः ।
तस्मान्न दोषोऽस्ति गृहं प्रवेष्टुं[4] तपोवनाद्धर्मनिमित्तमेव ॥६१॥
ततो वचस्तस्य निशम्य मंत्रिणः प्रियं हितं चैव नृपस्य चक्षुषः ।
अनूनमव्यस्तमसक्तमद्रुतं[5] धृतौ स्थितो राजसुतोऽब्रवीद्वचः ॥६२॥

[1] तव ता omitted in P तात not clear in C, तामत D [2] साल्व° C
[3] साङ्कृति° P See note in Appendix [4] प्रयातुं C [5] Ex conj अव्यस्तमशक्त° C अव्यक्तमशक्त° P

इहास्ति नास्तीति य एष संशयः परस्य वाक्यैर्न ममात्र निश्चयः।
अवेत्य तत्त्वं तपसा शमेन वा स्वयं[1]ग्रहीष्यामि यदत्र निश्चितं॥६३॥
न मे क्षमं संगशतं हि दर्शनं [1]ग्रहीतुमव्यक्तपरं पराहतं।
बुद्धः परप्रत्ययतो हि को व्रजेज्जनोऽधकारेऽध इवांधदेशितः[2]॥६४॥
अदृष्टतत्त्वस्य सतोऽपि किं तु मे शुभाशुभे संशयिते[3] शुभे मतिः।
वृथापि खेदोऽपि वरं शुभात्मनः सुखं न तत्त्वेऽपि विगर्हिता-
त्मनः ॥६५॥
इमं तु दृष्ट्वागममव्यवस्थितं यदुक्तमाप्तैस्तदवेहि[4] साध्विति।
प्रहीणदोषत्वमवेहि[4] चाप्तता प्रहीणदोषो ह्यनृतं न वक्ष्यति॥६६॥
गृहप्रवेशं प्रति यच्च मे भवानुवाच रामप्रभृतीन् निदर्शनं।
न ते प्रमाणं न हि धर्मनिश्चयेष्वलं प्रमाणाय परिक्षतव्रताः॥६७॥
तदेवमप्येव रविर्महीं पतेदपि[5] स्थिरत्वं हिमवान् गिरिस्त्यजेत्।
अदृष्टतत्त्वो विषयोन्मुखेंद्रियः श्रयेय न त्वेव गृहान् पृथग्जनः॥६८॥
अहं विशेयं[6] ज्वलितं हुताशनं[7] न चाकृतार्थः प्रविशेयमालयं।
इति प्रतिज्ञां स चकार गर्वितो [8]यथेष्टमुत्थाय च निर्ममो[9] ययौ॥६९॥
ततः सबाष्पौ सचिवद्विजावुभौ निशम्य तस्य स्थिरमेव निश्चयं।
विषण्णवक्त्रावनुगम्य दुःखितौ शनैरगत्या पुरमेव जग्मतुः॥७०॥
तत्स्नेहादथ नृपतेश्च भक्तितस्तौ सापेक्षं[10] प्रतिययतुश्च तस्थतुश्च।
दुर्धर्षं रविमिव दीप्तमात्मभासा तं द्रष्टुं न हि पथि शेकतुर्न
मोक्तुं ॥७१॥

[1] गृ° CP [2] देशिकः C [3] सनशयिते CP [4] अवैहि CP [5] अवि P
[6] विशेषं C [7] हुतासन C [8] यथैष्ट C [9] निर्यमो P [10] साक्षेप P

तौ ज्ञातुं परमगतेर्गतिं तु तस्य प्रच्छन्नांश्चरपुरुषाञ्छुचीन् विधाय।
राजानं प्रियसुतलालसं नु गत्वा द्रक्ष्यावः कथमिति जग्मतुः
कथंचित् ॥७२॥

इति श्रीबुद्धचरिते महाकाव्ये कुमारान्वेषणो[1] नाम
नवमः सर्गः ॥९॥

[1] Sic C P ०णं ?

# BOOK X

स राजवत्सः पृथुपीनवक्षास्तौ हव्यमंत्राधिकृतौ विहाय।
उत्तीर्य गंगां प्रचलत्तरंगां[1] श्रीमद्गृहं राजगृहं जगाम ॥१॥
शैलैः सुगुप्तं च विभूषितं च धृतं च पूतं च शिवैस्तपोदैः।
पंचाचलांकं नगरं प्रपेदे शांतः स्वयंभूरिव नाकपृष्ठं ॥२॥
गांभीर्यमोजश्च निशाम्य[2] तस्य वपुश्च दीप्तं पुरुषानतीत्य।
विसिस्मिये तत्र जनस्तदानीं [3]स्थाणुव्रतस्येव वृषध्वजस्य ॥३॥
तं प्रेक्ष्य योऽन्येन ययौ स तस्थौ यश्चात्र तस्थौ पथि सोऽन्वगच्छत्।
द्रुतं ययौ यः सदयं सधीरं यः कश्चिदास्ते स्म स चोत्पपात ॥४॥
कश्चित्तमानर्च जनः कराभ्यां सत्कृत्य कश्चिच्छिरसा ववंदे।
स्निग्धेन कश्चिद्वचसाभ्यनंदन्नैवं जगामाप्रतिपूज्य कश्चित् ॥५॥
तं जिह्रियुः प्रेक्ष्य विचित्रवेशाः प्रकीर्णवाचः पथि मौनमीयुः।
धर्मस्य साक्षादिव संनिकर्षान्न[4] कश्चिदन्यायमतिर्बभूव ॥६॥
[5]अन्यक्रियाणामपि राजमार्गे स्त्रीणां नृणां वा बहुमानपूर्वं।
तदेव कल्पं नरदेवसूत्रं[6] निरीक्षमाणा[7] न तु तस्य दृष्टिः ॥७॥
भ्रुवौ ललाटं मुखमीक्षणे वा वपुः करौ वा चरणौ गतिं वा।

[1] ०तुरगा C [2] So C P here and v. 73 [3] स्थानु C [4] ०कर्षे न्न P D, and so C perhaps pr. m [5] अन्यक्रियान्ं C [6] सूत्र corrected in margin of C to सूत, D has सूत [7] निरीच्यमाणा C P

यदेव यस्तस्य ददर्श तत्र तदेव [1]तस्यानुबबंध चक्षुः ॥८॥
दृष्ट्वा [2]शुभोर्णभ्रुवमायताक्षं ज्वलच्छरीरं शुभजालहस्तं ।
तं भिक्षुवेशं क्षितिपालनार्हं संचुक्षुभे राजगृहस्य लक्ष्मीः ॥९॥
श्रेण्योऽथ भर्ता मगधाजिरस्य वाह्याद्विमानाद्विपुलं जनौघं ।
ददर्श पप्रच्छ च तस्य हेतुं ततस्तमस्मै पुरुषः शशंस ॥१०॥
ज्ञानं परं वा पृथिवीश्रियं वा [3]विप्रैर्य उक्तोऽधिगमिष्यतीति ।
स एव शाक्याधिपतेस्तनूजो [4]निरीक्ष्यते प्रव्रजितो जनेन ॥११॥
ततः श्रुतार्थो मनसा गतार्थो राजा बभाषे पुरुषं तमेव ।
विज्ञायतां क्व प्रतिगच्छतीति तथेत्यथैनं पुरुषोऽन्वगच्छत् ॥१२॥
अलोलचक्षुर्युगमात्रदर्शी निवृत्तवाग्यंत्रितमंदगामी ।
चचार भिक्षां स तु भिक्षुवर्यो[5] निधाय गात्राणि चलं च चेतः ॥१३॥
आदाय भैक्षं च यथोपपन्नं ययौ गिरेः [6]प्रस्रवणं विविक्तं ।
न्यायेन तत्राभ्यवहृत्य चैनन्महीधरं [7]पांडवमारुरोह ॥१४॥
तस्मिन्वने लोध्रवनोपगूढे मयूरनादप्रतिपूर्णकुंजे ।
काषायवासाः स बभौ नृसूर्यो यथोदयस्योपरि बालसूर्यः ॥१५॥
तत्रैवमालोक्य स राजभृत्यः [8]श्रेण्याय राज्ञे कथयांचकार ।
संश्रुत्य राजा स च बाहुमान्यात्तत्र प्रतस्थे निभृतानुयात्रः ॥१६॥
स पांडवं[9] पांडवतुल्यवीर्यः शैलोत्तमं शैलसमानवर्ष्मा ।

[1] Ex conj. तस्यान्प्रववध C, तस्याद्व ववंध D, तस्माच्च ववंध P [2] Ex conj (Cf i 65, *c*) शुभं चभ्रुवं C P. [The Tibetan has 'smin-ma mjod-spu-dan bcas,' i e bhrû-ûrnâ-anvita H W] [3] Ex conj विप्रेय C P [4] निवीच्यते C [5] °चर्या P [6] प्रश्रवणं C [7] पांडर P, cf sloka 17 [8] श्रैन्याय C P [9] पाडर P

मौलीधरः सिंहगतिर्नृसिंहश्चलत्सटः[1] सिंह इवारुरोह ॥१७॥
चलस्य तस्योपरि शृंगभूतं शांतेंद्रियं पश्यति बोधिसत्त्वं ।
पर्यंकमास्थाय विरोचमानं शशांकमुद्यंतमिवाभ्रकूटात् ॥१८॥
तं रूपलक्ष्म्या च शमेन चैव धर्मस्य निर्माणमिवोपदिष्टं ।
सविस्मयः प्रश्रयवान् नरेंद्रः स्वयंभुवं शक्र इवोपतस्थे ॥१९॥
तं न्यायतो न्यायवतां वरिष्ठः समेत्य पप्रच्छ च धातुसाम्यं ।
स चाप्यवोचत्सदृशेन साम्ना नृपं मनःस्वास्थ्यमनामयं च ॥२०॥
ततः शुचौ वारणकर्णनीले शिलातलेऽसौ निषसाद राजा ।
[2]नृपोपविश्यानुमतश्च तस्य भावं विजिज्ञासुरिदं बभाषे ॥२१॥
प्रीतिः [3]परा मे भवतः[4] कुलेन क्रमागता चैव परीक्षिता च ।
[5]जाता विवक्षा सुत या यतो मे तस्मादिदं स्नेहवचो निबोध ॥२२॥
आदित्यपूर्वं विपुलं कुलं ते नवं वयो दीप्तमिदं वपुश्च ।
कस्मादियं ते मतिरक्रमेण [6]भैक्षाक एवाभिरता न राज्ये ॥२३॥
गात्रं हि ते लोहितचंदनार्हं काषायसंश्लेषमनर्हमेतत् ।
हस्तः[8] प्रजापालनयोग्य एष भोक्तुं न चार्हः परदत्तमन्नं ॥२४॥
तत्सौम्य राज्यं यदि पैतृकं त्वं स्नेहात्पितुर्नेच्छसि विक्रमेण ।
न च क्षमं मर्षयितुं मतिस्ते भुक्त्वार्धमस्मद्विषयस्य शीघ्रं ॥२५॥
एवं हि न स्यात्स्वजनावमर्दः कालक्रमेणापि[9] शमश्रया श्रीः ।

[1] चलन्सटः C P [2] So D, नृपोऽपविश्य C नृपाः प्रविश्य P [3] परात्मा C pr m, परामेत्मा D. [4] भवता P. [5] Ex conj याता C P [6] भैच्याक C [7] °संक्लेषं P. [8] हस्त° C [9] कालक्रमेणास्य P °क्रमेणास्य C pr m, but corrected to णापि in marg, °क्रमेणापिस्य D

तस्मात्कुरुष्व प्रणयं मयि त्वं सद्भिः सहीया[1] हि सतां समृद्धिः ॥२६॥
अथ त्विदानीं कुलगर्वितत्वादस्मासु विश्रंभगुणो न तेऽस्ति ।
व्यूहान्यनेकानि विगाह्य बाणैर्मया सहायेन पराञ्जिगीष[2] ॥२७॥
तद्बुद्धिमत्रान्यतरां[3] वृणीष्व धर्मार्थकामान् विधिवद्भजस्व ।
व्यत्यस्य रागादि ह हि त्रिवर्गं प्रेत्येह [4]विभ्रंशमवाप्नुवंति ॥२८॥
यो ह्यर्थधर्मौ[5] परिपीड्य कामः स्याद्धर्मकाम्ये[6] परिभूय चार्थः ।
कामार्थयोश्चोपरमेण धर्मस्त्याज्यः स कृत्स्नो यदि कांक्षितार्थः ॥२९॥
तस्मात्त्रिवर्गस्य निषेवणेन[7] त्वं रूपमेतत्सफलं कुरुष्व ।
धर्मार्थकामाधिगमं ह्यनूनं नृणामनूनं पुरुषार्थमाहुः ॥३०॥
तन्निष्फलौ नार्हसि कर्तुमेतौ पीनौ भुजौ चापविकर्षणार्हौ[8] ।
मांधातृवज्जेतुमिमौ हि योग्यौ लोकानि हि[9] त्रीणि हि किं
पुनर्गां ॥३१॥
स्नेहेन खल्वेतदहं ब्रवीमि नैश्वर्यरागेण[10] न विस्मयेन ।
इमं हि दृष्ट्वा तव भिक्षुवेशं जातानुकंपो[11]ऽस्म्यपि चागताश्रुः ॥३२॥
तद्भुंक्ष्व[12] भिक्षाश्रमकाम कामान्[13]कालेऽसि कर्ता प्रियधर्म धर्मं[14] ।
यावत्स्ववंशप्रतिरूपरूपं न ते जराभ्येत्यभिभूय भूयः ॥३३॥
शक्नोति जीर्णः खलु धर्ममाप्तुं कामोपभोगेष्वगतिर्जरायाः ।

[1] Sic C P. Should we read **सहीयो** (neut.) for **सहीयसी**? [2] Ex conj. **परा जिगीषु** C P (**°षुः** P), but in C the *u* of *shu* is in later ink and faint. [3] **°तर** C. [4] **विभ्रंसं** C P. [5] Ex conj. **योह्यत्र धर्मा** C P (**°र्मौ** P). [6] So C P. **°कार्मौ**? [7] **निषेवनेन** C P. [8] **°कर्षनार्हौ** C. [9] Sic C; P omits **हि**. Should we read **लोकानि ह**? [10] **°रागेन** C P. [11] **°कम्पो** C P. [12] **°भुत्त्व** C P. [13] Ex conj. **कामात्काले** C P. [14] **°धर्म** C. **धर्मः** P.

अतश्च यूनः कथयंति कामान्मध्यस्य वित्तं स्थविरस्य धर्मं ॥३४॥
धर्मस्य चार्थस्य च जीवलोके प्रत्यर्थिभूतानि हि यौवनानि ।
संरक्ष्यमाणान्यपि दुर्ग्रहाणि[2] कामा यतस्तेन यथा हरंति ॥३५॥
वयांसि जीर्णानि विमर्षयंति धीराण्यवस्थानपरायणानि[3] ।
अल्पेन यत्नेन शमात्मकानि भवंत्यगत्येव च लज्जया च ॥३६॥
अतश्च लोलं विषयप्रधानं प्रमत्तमक्षांतमदीर्घदर्शि ।
बहुच्छलं यौवनमभ्यतीत्य निस्तीर्य कांतारमिवाश्वसंति ॥३७॥
तस्मादधीरं चपलप्रमादि नवं वयस्तावदिदं व्यपैतु[4] ।
कामस्य पूर्वं हि वयः शरव्यं न शक्यते[5] रक्षितुमिंद्रियेभ्यः ॥३८॥
अथो चिकीर्षा तव धर्म एव यजस्व यज्ञं कुलधर्म एष ।
यज्ञैरधिष्ठाय हि नाकपृष्ठं ययौ मरुत्वानपि नाकपृष्ठं ॥३९॥
सुवर्णकेयूरविदष्टबाहवो मणिप्रदीपोज्ज्वलचित्रमौलयः ।
नृपर्षयस्तां हि गतिं गता मखैः श्रमेण यामेव महर्षयो ययुः ॥४०॥
इत्येवं मगधपतिर्बभाषे[6] यः सम्यग्वलभिदिव ध्रुवं बभाषे ।
तच्छ्रुत्वा न स विचचार राजसूनुः कैलासो[7] गिरिरिव नैकचित्रसानुः ॥४१॥

इति श्रीबुद्धचरिते महाकाव्येऽश्वघोषकृते श्रेण्याभिगमनो[8] नाम दशमः सर्गः ॥१०॥

[1] कामा C [2] दुस्सहानि C pr. m. but ग्र्ग written in the margin दुर्ग्गहानि D [3] ०नानि C [4] व्यपेतु C P [5] ०ति P [6] So C (C originally had *magadhipatu*, but the u is struck out), इत्येव स मगधाधिपतिर्बभाषे P. The line in C wants two syllables,—could we read इत्येव मगधमहीपतिर्बभाषे ? [7] ०ष्णो C P [8] So C P, ०न

# BOOK XI.

अथैवमुक्तो मगधाधिपेन सुहृन्मुखेन प्रतिकूलमर्थं ।
स्वस्थोऽविकारः कुलशौचशुद्धः शौद्धोदनिर्वाक्यमिदं जगाद ॥१॥
नाश्चर्यमेतद्भवतोऽभिधातुं जातस्य हर्यंककुले विशाले ।
यन्मित्रपक्षे तव मित्रकाम स्याद्वृत्तिरेषा परिशुद्धवृत्तेः[1] ॥२॥
असत्सु मैत्री स्वकुलानुरूपा न तिष्ठति श्रीरिव विक्लवेषु ।
पूर्वैः कृतां प्रीतिपरंपराभिस्तामेव संतस्तु विवर्धयंति ॥३॥
ये चार्थकृच्छ्रेषु भवंति लोके समानकार्याः सुहृदां मनुष्याः ।
मित्राणि तानीति परैमि बुद्ध्या स्वस्थस्य वृद्धिष्विह को हि न
स्यात् ॥४॥
एवं च ये द्रव्यमवाप्य लाके मित्रेषु धर्मे च नियोजयंति ।
अवाप्तसाराणि धनानि तेषां भ्रष्टानि नांते जनयंति तापं ॥५॥
सुहृत्तया चार्यतया च राजन् विभाव्य मामेव[2] विनिश्चयस्ते ।
अत्रानुनेष्यामि[3] सुहृत्तयैव ब्रूयामहं नोत्तरमन्यदत्र ॥६॥
अहं जरामृत्युभयं विदित्वा[4] मुमुक्षया धर्ममिमं प्रपन्नः ।
बंधून्प्रियानश्रुमुखान् विहाय प्रागेव कामानशुभस्य हेतून् ॥७॥

[1] ०वृत्तः C  [2] Ex conj. विहाय प्रागेव C P, which breaks the metre and seems borrowed from sloka 7 For the Tibetan see notes  [3] ०मेष्यामि C
[4] विहित्वा P.

नाशीविषेभ्योऽपि तथा बिभेमि[1] नैवाशनिभ्यो [2]गगणाच्च्युतेभ्यः।
न पावकेभ्योऽनिलसंहितेभ्यो यथा भयं मे विषयेभ्य [3]एभ्यः ॥८॥
कामा ह्यनित्याः[4] कुशलार्थचौरा रिक्ताश्च मायासदृशाश्च लोके।
आशास्यमाना अपि मोहयंति चित्तं नृणां किं पुनरात्मसंस्थाः ॥९॥
कामाभिभूता हि न यांति शर्म त्रिपिष्टपे किं बत मर्त्यलोके।
कामैः सतृष्णस्य हि नास्ति तृप्तिर्यथेंधनैर्वातसखस्य वह्नेः ॥१०॥
जगत्यनर्थो [5]न समोऽस्ति कामैर्मोहाच्च तेष्वेव जनः प्रसक्तः[6]।
तत्त्वं विदित्वैवमनर्थभीरुः प्राज्ञः स्वयं कोऽभिलषेदनर्थं ॥११॥
[7]समुद्रवस्त्रामपि गामवाप्य पारं जिगीषंति महार्णवस्य।
लोकस्य कामैर्न वितृप्तिरस्ति पतद्भिरंभोभिरिवार्णवस्य ॥१२॥
देवेन वृष्टेऽपि हिरण्यवर्षे द्वीपान्समुद्रांश्चतुरोऽपि जित्वा।
शक्रस्य चार्धासनमप्यवाप्य मांधातुरासीद्विषयेष्वतृप्तिः ॥१३॥
भुक्त्वापि राज्यं दिवि देवतानां शतक्रतौ वृत्रभयात्प्रनष्टे[8]।
दर्पान्महर्षीनपि वाहयित्वा कामेष्वतृप्तो नहुषः पपात ॥१४॥
[9]ऐडश्च राजा त्रिदिवं विगाह्य नीत्वापि देवीं वशमुर्वशीं[10] तां।
लोभादृषिभ्यः कनकं जिहीर्षुर्जगाम नाशं विषयेष्वतृप्तः ॥१५॥
बलेर्महेंद्रं नहुषं महेंद्रादिंद्रं पुनर्ये नहुषादुपेयुः।
स्वर्गे क्षितौ वा विषयेषु तेषु को विश्वसेद्भाग्यकुलाकुलेषु ॥१६॥
चीरांबरा मूलफलांबुभक्षा[11] जटा वहंतोऽपि भुजंगदीर्घाः।

[1] बिभेमि C P [2] गगन° P [3] एव C [4] अनर्थाः P [5] हि न C P
[6] प्रशक्तः C P [7] A gloss in C adds समुद्रमेव वस्त्र यस्याः सा [8] °णष्टे C P
[9] एड° C P [10] °र्वशी C P, the anusvâra is added in later ink in C [11] भक्ष्या P

येरन्यकार्या मुनयोऽपि भग्नाः कः कामसंज्ञान् मृगयेत शत्रून् ॥१७॥
[1]उग्रायुधश्चोग्रधृतायुधोऽपि येषां कृते मृत्युमवाप [2]भीष्मात् ।
चिंतापि तेषामशिवा वधाय तद्वृत्तिनां किं पुनरव्रतानां ॥१८॥
आस्वादमल्पं विषयेषु मत्वा संयोजनोत्कर्षमतृप्तिमेव[3] ।
सद्भ्यश्च गर्हां[4] नियतं च पापं कः कामसंज्ञं विषमाससाद[5] ॥१९॥
कृष्यादिभिर्धर्मभिरन्वितानां कामात्मकानां च निशम्य दुःखं ।
स्वास्थ्यं च कामेष्वकुतूहलानां कामान् विहातुं क्षममात्मवद्भिः ॥२०॥
ज्ञेया विपत्कामिनि कामसंपत्सिद्धेषु कामेषु मदं ह्युपैति ।
मदादकार्यं कुरुते न कार्यं येन क्षतो[6] दुर्गतिमभ्युपैति ॥२१॥
यत्नेन लब्धाः परिरक्षिताश्च ये विप्रलभ्य प्रतियांति भूयः ।
तेष्वात्मवान् याचितकोपमेषु कामेषु विद्वानिह[7] को रमेत ॥२२॥
अन्विष्य चादाय च जाततर्षा यानत्यजंतः परियांति दुःखं ।
लोके तृणोल्कासदृशेषु तेषु कामेषु कस्यात्मवतो रतिः स्यात् ॥२३॥
अनात्मवंतो हृदि यैर्विदष्टा विनाशमर्छंति न यांति शर्म ।
क्रुद्धोग्रसर्पप्रतिमेषु तेषु कामेषु कस्यात्मवतो रतिः स्यात् ॥२४॥
अस्थि क्षुधार्त्ता इव सारमेया भुक्तापि यान्नैव भवंति तृप्ताः ।
जीर्णास्थिकंकालसमेषु तेषु कामेषु कस्यात्मवतो रतिः स्यात् ॥२५॥
ये राजचौरोदकपावकेभ्यः साधारणत्वाज्जनयंति दुःखं ।
तेषु प्रविद्धामिषसंनिभेषु कामेषु कस्यात्मवतो रतिः स्यात् ॥२६॥

[1] उग्रायुधस्व॰ C [2] Ex conj. भीमात् C P. [3] Ex conj ॰नात्कर्षं C P. [4] Ex conj गर्ह्या C P [5] C (not D) corrects this to आददीत [6] Ex conj च्चते C P [7] Ex conj इहि C P

यत्र स्थितानामभितो विपत्तिः शत्रोः सकाशादपि बाधवेभ्यः ।
हिंस्रेषु तेष्वायतनोपमेषु कामेषु कस्यात्मवतो रतिः स्यात् ॥२७॥
गिरौ वने चाप्सु च सागरे च यद्भ्रंशमर्छन्त्यभिलंघमानाः ।
तेषु द्रुमप्राग्रफलोपमेषु[1] कामेषु कस्यात्मवतो रतिः स्यात् ॥२८॥
यानर्चयित्वापि न यांति शर्म विवर्धयित्वा परिपालयित्वा ।
अंगारकर्षप्रतिमेषु तेषु कामेषु कस्यात्मवतो रतिः स्यात् ॥२९॥
तीर्थैः प्रयत्नैर्विविधैरवाप्ताः क्षणेन ये नाशमिह प्रयांति ।
स्वप्नोपभोगप्रतिमेषु तेषु कामेषु कस्यात्मवतो रतिः स्यात् ॥३०॥
विनाशमीयुः कुरवो यदर्थं[2] वृष्ण्यंधका मैथिलदंडकाश्च ।
शूलासिकाष्ठप्रतिमेषु तेषु कामेषु कस्यात्मवतो रतिः स्यात् ॥३१॥
सुंदोपसुंदावसुरौ यदर्थमन्योन्यवैरप्रसृतौ विनष्टौ ।
सौहार्दविश्लेषकरेषु तेषु कामेषु कस्यात्मवतो रतिः स्यात् ॥३२॥
कामांधसंज्ञाः[3] कृपया व के च[4] क्रव्यात्सु [5]नात्मानमिहोत्सृजंति ।
सपत्नभूतेष्वशिवेषु तेषु कामेषु कस्यात्मवतो रतिः स्यात् ॥३३॥
[6]कामांधसंज्ञः कृपणं[7] करोति प्राप्नोति दुःखं वधबंधनादि ।
कामार्थमाशाकृपणस्तपस्वी मृत्युश्रमं चार्हति जीवलोके ॥३४॥
गीतैर्ह्रियंते हि मृगा वधाय रूपार्थमग्नौ शलभाः पतंति ।
[8]मत्स्यो [9]गिरत्यायसमामिषार्थी तस्माद्नर्थं विषयाः फलंति ॥३५॥

[1] Ex conj. °मलोपमेषु C P, cf Beal's Chinese transl 866. [2] यदर्थै P
[3] Ex conj °संज्ञः C P. [4] क्षपपावके ? C P [5] Ex conj. °रात्मानं C P [6] Ex conj. कामार्थ° C P [7] °नं C [8] Sic C P
[9] Ex conj गिरन्त्यायसं C P.

कामास्तु भोगा इति यन्मतं[1] स्याद्भोग्या न केचित्परिगण्यमानाः ।
वस्त्रादयो द्रव्यगुणा हि लोके दुःखप्रतीकार इति प्रधार्याः ॥३६॥
इष्टं हि तर्षप्रशमाय तोयं क्षुन्नाशहेतोरशनं तथैव ।
वातातपांब्वावरणाय वेश्म [2]कौपीनशीतावरणाय वासः ॥३७॥
निद्राविघाताय तथैव शय्या यानं तथाध्वश्रमनाशनाय ।
तथासनं स्थानविनोदनाय स्नानं [3]मृजारोग्यबलाश्रयाय ॥३८॥
दुःखप्रतीकारनिमित्तभूतास्तस्मात्प्रजानां विषया न भोग्याः ।
अश्नामि[4] भोगानिति कोऽभ्युपेयात्प्राज्ञः प्रतीकारविधौ प्रवृत्तान् ॥३९॥
यः पित्तदाहेन[5] विदह्यमानः शीतक्रियां भोग इति व्यवस्येत् ।
दुःखप्रतीकारविधौ प्रवृत्तः कामेषु कुर्यात्स हि भोगसंज्ञां[6] ॥४०॥
कामेष्वनैकांतिकता च यस्मादतोऽपि मे तेषु न भोगसंज्ञा ।
य एव भावा हि सुखं दिशंति त एव दुःखं पुनरावहंति ॥४१॥
गुरूणि वासांस्यगुरूणि चैव सुखाय गीते ह्यसुखाय धर्मे ।
चंद्रांशवश्चंदनमेव चोष्णे सुखाय दुःखाय भवंति शीते ॥४२॥
[7]द्वंद्वानि सर्वस्य यतः [8]प्रसक्तान्यलाभलाभप्रभृतीनि लोके ।
अतोऽपि नैकांतसुखोऽस्ति[9] कश्चिन्नैकांतदुःखः पुरुषः पृथिव्यां ॥४३॥
दृष्ट्वा च मिश्रां सुखदुःखतां मे राज्यं च दास्यं च मतं समानं ।

[1] ॰तः C P. [2] कोपीन C P [3] Ex conj. स्रजा C P [4] अश्नाति P.
[5] Ex conj. दाहान C P. [6] Ex conj ॰संज्ञं C P. [7] द्वंदानि C [8] प्रश्न॰ C
[9] ऽपि P.

नित्यं हसत्येव हि नैव राजा न चापि संतप्यत एव [1]दासः ॥४४॥
आज्ञा नृपत्वेऽभ्यधिकेति यस्मान्महांति दुःखान्यत एव राज्ञः ।
आसंगकाष्ठप्रतिमो हि राजा लोकस्य हेतोः परिखेदमेति ॥४५॥
राज्ये नृपस्त्यागिनि वंकमित्रे विश्वासमागच्छति चेद्विपन्नः ।
अथापि विश्रंभमुपैति नेह किं नाम सौख्यं चकितस्य राज्ञः ॥४६॥
यदा च जित्वापि महीं समग्रां वासाय दृष्टं पुरमेकमेव ।
तत्रापि चैकं भवनं निषेव्यं श्रमः परार्थे ननु राजभावः ॥४७॥
राज्येऽपि वासे युगमेकमेव क्षुत्संनिरोधाय [2]तथान्नमात्रा ।
शय्या तथैकासनमेकमेव शेषा विशेषा नृपतेर्मदाय ॥४८॥
तुष्ट्यर्थमेतच्च फलं [3]यदीष्टमृतेऽपि राज्यान्मम तुष्टिरस्ति ।
तुष्टौ च सत्यां पुरुषस्य लोके सर्वे विशेषा ननु निर्विशेषाः ॥४९॥
तन्नास्ति कामान् प्रति संप्रतार्यः [4]क्षेमे शिवं मार्गमनुप्रपन्नः ।
स्मृत्वा सुहृत्त्वं तु पुनः पुनर्मां ब्रूहि प्रतिज्ञां खलु पालयंति ॥५०॥
न ह्यस्म्यमर्षेण वनप्रविष्टो न शत्रुबाणैरवधूतमौलिः ।
[5]कृतस्पृहो नापि फलाधिकेभ्यो [6]गृह्णामि नैतद्वचनं यतस्ते ॥५१॥
यो दंदशूकं कुपितं भुजंगं मुक्त्वा व्यवस्येद्धि पुनर्ग्रहीतुं ।
दाहात्मिकां वा ज्वलितां तृणोल्कां संत्यज्य कामान्स पुनर्भ-
जेत[7] ॥५२॥
अंधाय यश्च स्पृहयेदनंधो बद्धाय मुक्तो विधनाय वाढ्यः ।
उन्मत्तचित्ताय च कल्यचित्तः स्पृहां स कुर्याद्विषयात्मकाय ॥५३॥

[1] Ex conj हासः C P [2] Ex conj तथानमात्रा C P [3] यदिष्टं P
[4] क्षेमे C. [5] Ex conj हृतस्पृहा C P [6] गृह्णामि C. [7] भजेत् C

[1]भिक्षोपभोगी [2]वर नानुकंप्यः कृती जरामृत्युभयं तितीर्षुः ।
इहोत्तमं शांतिसुखं च यस्य परत्र दुःखानि च संवृतानि ॥५४॥
लक्ष्म्यां महत्यामपि वर्तमानस्तृष्णाभिभूतस्त्वनुकंपितव्यः ।
प्राप्नोति यः शांतिसुखं न चेह परत्र दुःखं प्रतिगृह्यते च ॥५५॥
एवं तु वक्तुं भवतोऽनुरूपं सत्त्वस्य वृत्तस्य कुलस्य चैव ।
ममापि वोढुं सदृशं प्रतिज्ञां सत्त्वस्य वृत्तस्य कुलस्य चैव ॥५६॥
अहं हि संसाररसेन विद्धो विनिःसृतः शांतमवाप्नुकामः ।
नेच्छेयमाप्तुं त्रिदिवेऽपि राज्यं निरामयं किं वत मानुषेषु ॥५७॥
त्रिवर्गसेवा नृप [3]यत्तु कृत्स्नतः परो मनुष्यार्थ इति त्वमात्थ मां ।
अनर्थ इत्यात्थ[4] ममार्थदर्शनं क्षयी त्रिवर्गो[5] हि न चापि[6] तर्पकः॥५८॥
पदे तु यस्मिन्न जरा न भीरुता[7] न जन्म नैवोपरमो न वाधयः ।
तमेव मन्ये पुरुषार्थमुत्तमं न विद्यते यत्र पुनः पुनः क्रिया ॥५९॥
यदप्यवोचः परिपाल्यतां जरा नवं वयो गच्छति विक्रियामिति ।
अनिश्चयोऽयं चपलं हि दृश्यते जराप्यधीरा धृतिमच्च यौवनं ॥६०॥
स्वकर्मदक्षश्च[8] यदा तु को जगद्वयःसु सर्वेषु च[9] संविकर्षति ।
विनाशकाले कथमव्यवस्थिते जरा प्रतीक्ष्या विदुषा शमेप्सुना[10] ॥६१॥
जरायुधो व्याधिविकीर्णसायको यदांतको व्याध इवाश्रितः स्थितः ।
प्रजामृगान् भाग्यवनाश्रितांस्तुदन्[11] वयःप्रकर्षं प्रति को मनोरथः ॥६२॥

[1] भैषो° C [2] Ex conj भिर (?) नानु° C (not clearly written), भिररानु° D; वरणानु° P Should we read वत? [3] यन्तु C, यन्न P [4] Ex conj. इत्यर्थ C P [5] °वर्गो C [6] चार्थ P [7] Ex conj भीरुर् C P. [8] °दत्त्वत्तु P [9] व C [10] समे° C P [11] °श्रितान्सुदन् C P

सुतो युवा वा स्थविरोऽथवा शिशुस्तथा त्वरावानिह कर्तुमर्हति ।.
यथा भवद्धर्मवतः कृपात्मनः प्रवृत्तिरिष्टा [1]विनिवृत्तिरेव वा ॥ ६३ ॥
यदात्थ वा दीप्तफलां[2] कुलोचितां कुरुष्व धर्माय मखक्रियामिति ।
नमो मखेभ्यो न हि कामये सुखं परस्य दुःखक्रिययापदिश्यते[3] ॥ ६४ ॥
परं हि [4]हंतुं विवशं फलेप्सया न युक्तरूपं करुणात्मनः सतः ।
क्रतोः फलं यद्यपि शाश्वतं भवेत् तथापि कृत्वा किमुपक्षयात्मकं ॥ ६५ ॥
भवेच्च धर्मो यदि नापरो विधिर्[5]व्रतेन शीलेन मनःशमेन[6] वा ।
तथापि नैवार्हति सेवितुं क्रतुं विशस्य यस्मिन् परमुच्यते फलं ॥ ६६ ॥
इहापि तावत्पुरुषस्य तिष्ठतः प्रवर्तते यत्परहिंसया सुखं ।
तदप्यनिष्टं सघृणस्य धीमतो भवांतरे किं वत यन्न दृश्यते ॥ ६७ ॥
न च प्रतार्योऽस्मि फलप्रवृत्तये भवेषु राजन् रमते न मे मनः ।
लता इवांभोधरवृष्टि[7]ताडिताः प्रवृत्तयः सर्वगता हि चंचला ॥ ६८ ॥
इहागतश्चाहमितो दिदृक्षया मुनेरराडस्य विमोक्षवादिनः ।
प्रयामि चाद्यैव नृपास्तु ते शिवं वचः क्षमेथाः [8]शमतत्त्वनिष्ठुरं ॥ ६९ ॥
अवेंद्रवद्दिव्यव शश्वदर्कवद्गुणैरव श्रेय इहाव गामव[9] ।
अवायुरार्यैरव[10] सत्सुतान्[11] अव श्रियश्च राजन्नव धर्ममात्मनः ॥ ७० ॥
हिमारिकेतूद्भवसंभवांतरे[12] यथा द्विजो याति [13]विमोक्षयंस्तनुं ।

[1] विनिष्ठत्तिरेव P [2] दीप्तिफलां P [3] °दिष्यते C, °क्रिययोपदिश्यते P
[4] Ex conj हंत विवशं C, हंताविविवशं P [5] विधिवतेन C. [6] समेन C
[7] °वृत्ति° P [8] Ex conj समतत्व° C, समतन्व° P [9] Ex conj गामरः C P
[10] °आर्यैरव C The Tibetan has âryaıh [11] °न्सुतान् C P [12] Ex conj.
°द्भवसभवांतरे C P; cf the same mistake infra, xii 4 as compared with xii. 28
[13] विमोचयस्तनुं C

हिमारिशत्रुं[1] क्षयशत्रुघातिनस्तथांतरे याहि[2] विमोचयन्मनः ॥७१॥
नृपोऽब्रवीत्सांजलिरागतस्पृहो य-ेष्टमाप्नोति भवानविघ्नतः ।
अवाप्य काले कृतकृत्यतामिमां ममापि कार्यो भवता त्वनु-
ग्रहः ॥७२॥
स्थिरं प्रतिज्ञाय तथेति पार्थिवे ततः स वैश्वंतरमाश्रमं ययौ ।
परिव्रजंतं समुदीक्ष्य विस्मितो नृपोऽपि च [3]प्रापुरिमं गिरिं[4]
व्रजन्[5] ॥७३॥

इति श्रीबुद्धचरिते महाकाव्येऽश्वघोषकृते कामविगर्हणो[6]
नामैकादशः सर्गः ॥११॥

[1] ॰शत्रु C P. [2] याति P [3] Sic C P. [4] गिरि C. [5] व्रजं C, व्रजत् P. (Cf Mahâbh. III. 16745) [6] ॰णं ?

# BOOK XII.

ततः [1]श्रमविहारस्य मुनेरिक्ष्वाकुचंद्रमाः ।
अराडस्याश्रमं भेजे वपुषा पूजयन्निव ॥१॥
स कालामसगोत्रेण तेनालोक्यैव दूरतः ।
उच्चैः स्वागतमित्युक्तः समीपमुपजग्मिवान् ॥२॥
तावुभौ न्यायतः पृष्ट्वा धातुसाम्यं परस्परं ।
दारव्योर्मेध्ययोर्वृष्योः शुचौ देशे निषीदतुः[2] ॥३॥
तमासीनं नृपसुतं सोऽब्रवीन्मुनिसत्तमः ।
बहुमानविशालाभ्यां दर्शनाभ्यां पिबन्निव ॥४॥
विदितं मे यथा सौम्य निष्क्रांतो भवनादसि ।
छित्त्वा स्नेहमयं पाशं पाशं दृप्त इव द्विपः ॥५॥
सर्वथा धृतिमच्चैव प्राज्ञं चैव मनस्तव ।
यस्त्वं प्राप्तः श्रियं त्यक्त्वा लतां विषफलामिव ॥६॥
नाश्चर्यं जीर्णवयसो यज्जग्मुः पार्थिवा वनं ।
अपत्येभ्यः श्रियं दत्त्वा भुक्तोच्छिष्टामिव स्रजं[3] ॥७॥
इदं मे मतमाश्चर्यं नवे वयसि यद्भवान् ।
[4]अभुक्त्वैव श्रियं प्राप्तः स्थितो विषयगोचरे ॥८॥

[1] समº C P [2] Sic C P, cf supra, ix 11, Mahâbh iii. 14650. [3] श्रियं P.
[4] Ex conj. अभुक्तैव C, P omits 8 b, 9 a.

तद्विज्ञातुमिमं धर्मं परमं भाजनं भवान्।
ज्ञानपूर्वमधिष्ठाय शीघ्रं दुःखार्णवं तर ॥९॥
शिष्ये यद्यपि विज्ञाते शास्त्रं कालेन वर्तते।
गांभीर्याद्व्यवसायाच्च सुपरीक्ष्यो भवान् मम ॥१०॥
इति वाक्यमराडस्य विज्ञाय स नराधिपः।
बभूव परमप्रीतः प्रोवाचोत्तरमेव च ॥११॥
विरक्तस्यापि यदिदं सौमुख्यं भवतः परं।
अकृतार्थोऽप्यनेनास्मि कृतार्थ इव संप्रति ॥१२॥
[1]दिदृक्षुरिव हि ज्योतिर्यियासुरिव दैशिकं।
[2]त्वद्दर्शनादहं मन्ये तितीर्षुरिव च प्लवं ॥१३॥
तस्मादर्हसि तद्वक्तुं वक्तव्यं यदि मन्यसे।
जरामरणरोगेभ्यो यथायं परिमुच्यते ॥१४॥
इत्यराडः कुमारस्य माहात्म्यादेव चोदितः।
संक्षिप्तं कथयांचक्रे स्वस्य शास्त्रस्य निश्चयं ॥१५॥
श्रूयतामयमस्माकं सिद्धांतः शृण्वतां वर।
यथा भवति संसारो यथा वै परिवर्तते ॥१६॥
प्रकृतिश्च विकारश्च जन्म[3] मृत्युर्जरैव च।
तत्तावत्सत्त्वमित्युक्तं[4] स्थिरसत्त्व परेहि नः ॥१७॥
तत्र तु प्रकृतिर्नाम विद्धि प्रकृतिकोविद।
पंच भूतान्यहंकारं बुद्धिमव्यक्तमेव च ॥१८॥

[1] Ex conj दिदिक्षुः C P. [2] त्वद्दर्शना° P [3] Ex conj. जरा C P.
[4] सत्यमित्युक्तं P

विकार इति [1]बुद्धिं तु विषयानिंद्रियाणि च ।
पाणिपादं च वादं च पायूपस्थं तथा मनः ॥१९॥
अस्य क्षेत्रस्य विज्ञानात् क्षेत्रज्ञ इति संज्ञि च ।
क्षेत्रज्ञ इति चात्मानं कथयंत्यात्मचिंतकाः ॥२०॥
सशिष्यः कपिलश्चेह[2] प्रतिबुद्ध[3] इति स्मृतिः ।
सपुत्रः प्रतिबुद्धश्च[4] प्रजापतिरिहोच्यते ॥२१॥
जायते [5]जीर्यते चैव बध्यते [6]म्रियते च यत् ।
तद्व्यक्तमिति विज्ञेयमव्यक्तं च विपर्ययात् ॥२२॥
अज्ञानं कर्म तृष्णा च ज्ञेयाः संसारहेतवः ।
स्थितोऽ[7]स्मिंस्त्रितये यस्तु तत्सत्त्वं नाभिवर्तते ॥२३॥
विप्रत्ययादहंकारात्संदेहादभिसंप्लवात्[8] ।
अविशेषानुपायाभ्यां संगादभ्यवपाततः ॥२४॥
तत्र विप्रत्ययो नाम विपरीतं प्रवर्तते ।
अन्यथा कुरुते कार्यं मंतव्यं [9]मन्यतेऽन्यथा ॥२५॥
ब्रवीम्यहमहं वेद्मि गच्छाम्यहमहं स्थितः ।
इतीहैवमहंकारस्त्वनहंकार वर्तते ॥२६॥
यस्तु भावेन संदिग्धानेकीभावेन पश्यति ।
मृत्पिंडवदसंदेह[10] संदेहः स इहोच्यते ॥२७॥

[1] बुद्धिस्तु P, बुद्धिमतु C [2] चैव P [3] Ex conj प्रतिबुद्धि इति C P.
[4] Sic P and C pr. manu, but C has been altered to °बुद्धम्न °स्तु D [5] जीयते C P
[6] Ex conj श्रियते C P [7] ऽस्मिन्त्रि C [8] Ex conj (cf sloka 28) अपि संभवात् P, अपि संभवा C [9] मस्यते C मस्यते P [10] Ex conj °देहः C P

य एवाहं स एवेदं मनो बुद्धिश्च कर्म च ।
यश्चैवं स गणः सोऽहमिति यः सोऽभिसंप्लवः ॥२८॥
अविशेषं विशेषज्ञ प्रतिबुद्धाप्रबुद्धयोः ।
प्रकृतीनां च यो वेद सोऽविशेष इति स्मृतः ॥२९॥
नमस्कारवषट्कारौ प्रोक्षणाभ्युक्षणादयः ।
अनुपाय इति प्राज्ञैरुपायज्ञ प्रवेदितः ॥३०॥
सज्जते येन दुर्मेधा मनोवाक्कर्मबुद्धिभिः[1] ।
विषयेष्वनभिष्वंग सोऽभिष्वंग इति स्मृतः ॥३१॥
ममेदमहमस्येति यद्दुःखमभिमन्यते ।
विज्ञेयोऽभ्यवपातः स संसारे येन पात्यते ॥३२॥
इत्यविद्या हि विद्वांसः[2] पंचपर्वा[3] समीहते ।
तमो मोहं महामोहं [4]तामिस्रद्वयमेव च ॥३३॥
तत्रालस्यं तमो विद्धि मोहं[5] मृत्युं च जन्म च ।
महामोहस्त्वसंमोह काम इत्यवगम्यताम् ॥३४॥
यस्मादत्र च भूतानि प्रमुह्यंति महांत्यपि ।
तस्मादेष महाबाहो[6] महामोह इति स्मृतः ॥३५॥
[7]तामिस्रमिति चाक्रोध क्रोधमेवाधिकुर्वते ।
विषादं[8] चांधतामिस्रमविषाद प्रचक्षते ॥३६॥
अनयाविद्यया बालः संयुक्तः पंचपर्वया ।

[1] °वागबुद्धिकर्मभिः C. [2] C omits :. [3] Ex conj. पंचपर्वाम्समीहति C P (cf. sloka 37) [4] तामिश्र° C P [5] Ex conj मोह C, मोहों P. [6] °मोहो P [7] तामिश्र° P [8] °द C, °दश्च P

संसारे दुःखभूयिष्ठे जन्मस्वभिनिषिच्यते[1] ॥३७॥
द्रष्टा श्रोता च मंता च [2]कार्यं करणमेव च।
अहमित्येवमागम्य संसारे परिवर्तते ॥३८॥
इत्येभिर्हेतुभिर्धीमन् तमःस्रोतः[3] प्रवर्तते।
हेत्वभावे[4] फलाभाव इति विज्ञातुमर्हसि ॥३९॥
तत्र सम्यग्मतिर्विद्यान्मोक्षकाम चतुष्टयं।
प्रतिबुद्धाप्रबुद्धौ च व्यक्तमव्यक्तमेव च ॥४०॥
यथावदेतद्विज्ञाय क्षेत्रज्ञो हि चतुष्टयं।
आर्जवं जवतां[5] हित्वा प्राप्नोति पदमक्षरं ॥४१॥
इत्यर्थं ब्राह्मणा लोके परमब्रह्मवादिनः।
ब्रह्मचर्यं चरंतीह ब्राह्मणान् वासयंति च ॥४२॥
इति वाक्यमिदं श्रुत्वा मुनेस्तस्य नृपात्मजः।
अभ्युपायं च पप्रच्छ पदमेव च नैष्ठिकं ॥४३॥
ब्रह्मचर्यमिदं चर्यं यथा यावच्च यत्र च।
धर्मस्यास्य च पर्यंतं[6] भवान् व्याख्यातुमर्हति ॥४४॥
इत्यराडो यथाशास्त्रं विस्पष्टार्थं समासतः।
तमेवान्येन कल्पेन धर्ममस्मै व्यभाषत ॥४५॥
अयमादौ गृहान्मुक्त्वा भैक्षाकं लिंगमाश्रितः।
समुदाचारविस्तीर्णं शीलमादाय वर्तते ॥४६॥
संतोषं परमास्थाय येन तेन यतस्ततः।

[1] ०षिव्यते C [2] कार्य० C [3] ०श्रोतः C P [4] Ex conj. ०व C P
[5] ०ता C. [6] पर्यस्तं P

विविक्तं सेवते वासं निर्द्वन्द्वः शास्त्रवित्कृती ॥४७॥
ततो रागाद्भयं दृष्ट्वा वैराग्याच्च परं शिवं ।
[1]निगृह्णन्निंद्रियग्रामं यतते मनसः श्रमे[2] ॥४८॥
अथो विविक्तं कामेभ्यो व्यापादादिभ्य एव च ।
विवेकजमवाप्नोति पूर्वध्यानं [3]वितर्कवत् ॥४९॥
तच्च ध्यानं सुखं प्राप्य तत्तदेव वितर्कयन् ।
अपूर्वसुखलाभेन ह्रियते बालिशो जनः ॥५०॥
शमेनैवंविधेनायं कामद्वेषविगर्हिणा ।
ब्रह्मलोकमवाप्नोति परितोषेण[4] वंचितः ॥५१॥
ज्ञात्वा विद्वान् वितर्कांस्तु मनःसंक्षोभकारकान् ।
तद्वियुक्तमवाप्नोति ध्यानं प्रीतिसुखान्वितं ॥५२॥
ह्रियमाणस्तया[5] प्रीत्या यो विशेषं न पश्यति ।
स्थानं भास्वरमाप्नोति देवेष्वाभासुरेष्वपि[6] ॥५३॥
यस्तु प्रीतिसुखात्तस्माद्विवेचयति मानसं ।
तृतीयं लभते ध्यानं सुखं प्रीतिविवर्जितं ॥५४॥
[7]तत्र केचिद्व्यवस्यंति मोक्ष इत्यपि मानिनः ।
सुखदुःखपरित्यागादव्यापाराच्च चेतसः ॥५५॥
यस्तु तस्मिन्सुखे मग्नो न विशेषाय यत्नवान् ।
शुभकृत्स्नैः स सामान्यं सुखं प्राप्नोति दैवतैः[8] ॥५६॥

[1] निगृह्य° C [2] ग्रामे ? [3] विवेकवत् P [4] °न C [5] °नस्तया C
[6] Sic C D P (C corrected in margin to °रेषु सः) [7] Sloka 55 is enclosed in brackets here and reinserted after sloka 57 in C, D inserts it twice [8] देवतैः C P.

तादृशं सुखमासाद्य यो न रज्यन्नुपेक्षते[1] ।
चतुर्थं ध्यानमाप्नोति सुखदुःखविवर्जितं ॥५७॥
अस्य ध्यानस्य तु फलं समं देवैर्वृहत्फलैः ।
कथयंति वृहत्फलं वृहत्प्रज्ञापरीक्षकाः ॥५८॥
समाधेर्व्युत्थितस्तस्माद्दृष्ट्वा दोषांश्छरीरिणां ।
ज्ञानमारोहति प्राज्ञः शरीरविनिवृत्तये[2] ॥५९॥
ततस्तद्ध्यानमुत्सृज्य विशेषे कृतनिश्चयः ।
कामेभ्य इव सत्प्राज्ञो रूपादपि विरज्यते ॥६०॥
शरीरे खानि यान्यस्य तान्यादौ परिकल्पयन् ।
घनेष्वपि ततो द्रव्येष्वाकाशमधिमुच्यते ॥६१॥
[3]आकाशसममात्मानं संक्षिप्य त्वपरो बुधः ।
तदैवानंततः पश्यन् विशेषमधिगच्छति ॥६२॥
अध्यात्मकुशलेष्वन्यो [4]निवर्त्यात्मानमात्मना ।
किंचिन्नास्तीति संपश्यन्नाकिंचन्य[5] इति स्मृतः ॥६३॥
ततो मुंजादिषीकेव[6] शकुनिः पंजरादिव ।
क्षेत्रज्ञो [7]निःसृतो देहान्मुक्त इत्यभिधीयते ॥६४॥
एतत्तत्परमं ब्रह्म निर्लिंगं ध्रुवमक्षरं ।
यन्मोक्ष इति तत्त्वज्ञाः कथयंति मनीषिणः ॥६५॥
इत्युपायश्च मोक्षश्च मया संदर्शितस्तव ।

[1] Ex conj यो न रज्यत्युपेक्षते C P [2] ॰निवर्त्तये C [3] अकाश--तमात्मानं C [4] निर्वत्य॰ C P. [5] आ किंचिन्य C (cf infra, sloka 8 ) [6] दृषीकेव C P [7] निसृतो C

यदि ज्ञातं यदि रुचि यथावत्प्रतिपद्यतां[1] ॥६६॥
जैगीषव्योऽपि जनको वृद्धश्चैव पराशरः ।
इमं पंथानमासाद्य[2] मुक्ता[3] ह्यन्ये च मोक्षिणः ॥६७॥
इति तस्य स तद्वाक्यं गृहीत्वा न[4] विचार्य च ।
पूर्वहेतुबलप्राप्तः प्रत्युत्तरमुवाच सः ॥६८॥
श्रुतं ज्ञानमिदं [5]सूक्ष्मं परतः परतः शिवं ।
[6]क्षेत्रेष्वस्यापरित्यागादवैम्येतदनैष्ठिकं ॥६९॥
विकारप्रकृतिभ्यो हि क्षेत्रज्ञं मुक्तमप्यहं ।
मन्ये प्रसवधर्माणं वीजधर्माणमेव च ॥७०॥
विशुद्धो यद्यपि ह्यात्मा [7]निर्मुक्त इति कल्प्यते ।
अत्यंतस्तत्परित्यागः सत्यात्मनि न विद्यते ॥७१॥
हित्वा हित्वा त्रयमिदं विशेषस्तूपलभ्यते ।
आत्मनस्तु स्थितिर्यत्र तत्र [8]सूक्ष्ममिदं त्रयं ॥७२॥
[8]सूक्ष्मत्वाच्चैव दोषाणामव्यापाराच्च चेतसः ।
दीर्घत्वादायुषश्चैव मोक्षस्तु परिकल्प्यते ॥७३॥
अहंकारपरित्यागो यश्चैष परिकल्प्यते ।
सत्यात्मनि परित्यागो नाहंकारस्य विद्यते ॥७४॥
संख्यादिभिरमुक्तश्च निर्गुणो न भवत्ययं ।
तस्मादसति नैर्गुण्ये नास्य मोक्षोऽभिधीयते ॥७५॥

[1] So D, ०बुध्यतां P, (C has प्रतिबुपद्यतां) [2] आश्रित्य P [3] Ex conj. मुक्तो C P [4] Sic C P. च? [5] स्थू० C P. [6] So C P Should we read चेतस्यास्यापरित्यागात्? [7] निमुक्त C. [8] स्थू० C P

गुणिनो हि गुणानां च व्यतिरेको न विद्यते ।
रूपोष्णाभ्यां विरहितो न ह्यग्निरुपलभ्यते ॥७६॥
प्राग्देहान्न भवेद्देही प्राग्गुणेभ्यस्तथा गुणी ।
[1]कस्मादादौ विमुक्तः [2]सञ्शरीरी बध्यते पुनः ॥७७॥
क्षेत्रज्ञो विशरीरश्च ज्ञो वा स्यादज्ञ एव वा[3] ।
यदि ज्ञो ज्ञेयमस्यास्ति ज्ञेये सति न मुच्यते ॥७८॥
अथाज्ञ इति सिद्धो वः[4] कल्पितेन किमात्मना ।
विनापि ह्यात्मनाज्ञानं प्रसिद्धं काष्ठकुड्यवत् ॥७९॥
परतः परतस्त्यागो यस्मात्तु गुणवान् स्मृतः ।
तस्मात्सर्वपरित्यागान्मन्ये कृत्स्नां [5]कृतार्थतां ॥८०॥
इति धर्ममराडस्य विदित्वा न तुतोष सः[6] ।
अकृत्स्नमिति विज्ञाय ततः प्रतिजगाम ह ॥८१॥
विशेषमथ शुश्रूषु[7]रुद्रकस्याश्रमं ययौ ।
आत्मग्राहाच्च तस्यापि जगृहे न स दर्शनं ॥८२॥
संज्ञासंज्ञित्वयोर्दोषं ज्ञात्वा हि मुनिरुद्रकः ।
आकिंचन्यात्परं लेभे संज्ञासंज्ञात्मिकां गतिं ॥८३॥
यस्माच्चालंबने [8]सूक्ष्मे संज्ञासंज्ञे ततः परं ।
नासंज्ञी नैव संज्ञीति तस्मात्तत्र गतस्पृहः ॥८४॥
यतश्च बुद्धिस्तत्रैव स्थितान्यत्राप्रचारिणी ।

[1] Ex conj. तस्माद् C P [2] सन्न शरीरी C स शरीरी P [3] च C.
[4] वा P. [5] कृतां -- C [6] सा C [7] शुश्रूषू रुद्र° P (Cf Burnouf, *Ir* , p 386) [8] श्रु° C

[1]सूक्ष्मापादि ततस्तच्च नासंज्ञित्वं न संज्ञिता ॥८५॥
यस्माच्च तमपि प्राप्य पुनरावर्तते जगत् ।
बोधिसत्त्वः[2] परं प्रेप्सुस्तस्मा[3]दुद्रकमत्यजत् ॥८६॥
ततो हित्वाश्रमं तस्य श्रेयोऽर्थी कृतनिश्चयः ।
भेजे गयस्य राजर्षेर्नगरीसंज्ञमाश्रमं ॥८७॥
अथ नैरंजनातीरे शुचौ शुचिपराक्रमः ।
चकार वासमेकांतविहाराभिव्रती[4] मुनिः ॥८८॥
पंचोपतस्थुर्दृष्ट्वाच भिक्षवस्तं मुमुक्षवः ।
पुण्यार्जितधनारोग्यमिंद्रियार्था इवेश्वरं ॥८९॥
संपूज्यमानस्तैः[5] प्रह्वैर्विनयानतमूर्तिभिः ।
तद्वंशस्थायिभिः शिष्यैर्लोलैर्मन इवेंद्रियैः ॥९०॥
मृत्युजन्मांतकरणे स्यादुपायोऽयमित्यथ ।
दुष्कराणि समारेभे तपांस्यनशनेन सः ॥९१॥
उपवासविधीन् नैकान् कुर्वन् नरदुराचरान् ।
वर्षाणि षट्कर्मप्रे[6]प्सुरकरोत्कार्श्यमात्मनः ॥९२॥
अन्नकालेषु चैकैकैः सकोलतिलतंडुलैः ।
अपारपारसंसारपारं[7] प्रेप्सुरपारयत् ॥९३॥
देहादपचयस्तेन तपसा तस्य यः कृतः ।
स एवोपचयो भूयस्तेजसास्य कृतोऽभवत्[8] ॥९४॥

[1] Ex conj मूच्छाऽपद्वो (?) C P; °द्वी D [2] Ex conj °सत्त्वं C P
[3] तस्माद्द्रुद्रक° C P here (C has been altered) [4] अभिव्रतिर्मुनिः C. [5] प्रह्वैस्तैः P.
[6] षट्कमप्रेप्सुः C P (°कर्म° from the Tibetan) [7] °संपारपारं P. [8] Ex conj भवेवत् C D omits, भवेत् P

कृशोऽप्यकृशकीर्तिश्रीर्ह्लादं[1] चक्रेऽन्यचक्षुषं[2] [3] ।
कुमुदानामिव शरच्छुक्लपक्षादिचंद्रमाः ॥९५॥
त्वगस्थिशेषो निःशेषैर्मेदःपिशितशोणितैः ।
क्षीणोऽप्यक्षीणगांभीर्यः समुद्र इव स व्यभात् ॥९६॥
अथ कष्टतपःस्पष्टव्यर्थक्लिष्टतनुर्मुनिः ।
[4]भवभीरुरिमां चक्रे बुद्धिं बुद्धत्वकांक्षया ॥९७॥
नायं धर्मो विरागाय न बोधाय न मुक्तये ।
जंबुमूले मया प्राप्तो यस्तदा स विधिर्ध्रुवं ॥९८॥
न चासौ दुर्बलेनाप्तुं[5] शक्यमित्यागतादरः ।
शरीरबलवृद्ध्यर्थमिदं भूयोऽन्वचिंतयत् ॥९९॥
क्षुत्पिपासाश्रमक्लांतः श्रमादस्वस्थमानसः ।
प्राप्नुयान्मनसावाप्यं फलं कथमनिर्वृतः ॥१००॥
निर्वृतिः प्राप्यते सम्यक्सततेंद्रियतर्पणात् ।
संतर्पितेंद्रियतया मनःस्वास्थ्यमवाप्यते[6] ॥१०१॥
स्वस्थप्रसन्नमनसः समाधिरुपपद्यते ।
समाधियुक्तचित्तस्य ध्यानयोगः प्रवर्तते ॥१०२॥
ध्यानप्रवर्तनाद्धर्माः प्राप्यंते यैरवाप्यते ।
दुर्लभं शांतमजरं परं तदमृतं पदं ॥१०३॥
तस्मादाहारमूलोऽयमुपाय इतिनिश्चयः ।

[1] श्रष्टत° P [2] श्रीर्ह्लादं C. [3] Sic P [4] Ex conj. भवभीरुरिमां C P [5] आप्तं C [6] अवाप्नुयात् P

[1]असूरीकरणे धीरः कृत्वामितमतिर्मतिं[2] ॥१०४॥
स्नातो [3]नैरंजनातीरादु[4]त्ततार शनैः कृशः ।
भक्त्यावनतशाखाग्रैर्दत्तहस्तस्तटद्रुमैः ॥१०५॥
अथ गोपाधिपसुता [5]दैवतैरभिचोदिता ।
उद्भूतहृदयानंदा तत्र नंदबलागमत्[6] ॥१०६॥
सितशंखोज्ज्वलभुजा नीलकंबलवासिनी ।
सफेणमालानीलांबुर्यमुनेव सरिद्वरा ॥१०७॥
सा श्रद्धा[7]वर्धितप्रीतिर्विकसल्लोचनोत्पला[8] ।
शिरसा [9]प्रणिपत्यैनं ग्राहयामास पायसं ॥१०८॥
कृत्वा तदुपभोगेन प्राप्तजन्मफलां स तां[10] ।
बोधिप्राप्तौ[11] समर्थोऽभूत्संतर्पितषडिंद्रियः ॥१०९॥
[12]पर्याप्ताप्यानमूर्तिश्च [13]सार्धं सुयशसा मुनिः ।
कांतिधैर्यैकभारैकः शशांकार्णववद्बभौ[14] ॥११०॥
आवृत्त इति विज्ञाय तं जहुः[15] पंचभिक्षवः ।
मनीषिणमिवात्मानं निर्मुक्तं पंचधातवः ॥१११॥
व्यवसायद्वितीयोऽथ शाद्वलास्तीर्णभूतलं ।
सोऽश्वत्थमूलं प्रययौ बोधाय कृतनिश्चयः ॥११२॥

[1] Ex conj आसूरकरणे C P (आसू॰ P) [2] मतिः C P [3] नै॰ C
[4] Ex conj तीरो उत्ततार C P [5] देवतैः C P [6] Ex conj. ऽशमत् C, ऽश्रमे P [7] Ex conj श्रद्धाविद्धित॰ C P. [8] ॰नात्परा C [9] प्रतपत्येनं C
[10] Ex conj ॰जन्यफलासतां C, ॰जन्यफलाशतं P [11] Ex conj ॰प्राप्तो C, प्राप्त P
[12] पर्याप्तध्यान॰ P. [13] सार्धसुयससा C [14] Ex conj. ॰वर्द्धयोः C P
[15] Ex conj जहुः C P

ततस्तदानीं गजराजविक्रमः [1]पदस्वनेनानुपमेन बोधितः ।
महामुनेरागतबोधिनिश्चयो जगाद् कालो भुजगोत्तमः स्तुतिं॥११३॥
यथा.मुने त्वच्चरणावपीडिता मुहुर्मुहुर्नि[2]ष्टनतीव मेदिनी ।
यथा च ते राजति[3] सूर्यवत्प्रभा ध्रुवं[4] त्वमिष्टं फलमद्य भोक्ष्यसे॥११४॥
यथा भ्रमंत्यो दिवि [5]वायपंक्तयः प्रदक्षिणं त्वां कमलाक्ष कुर्वते ।
यथा च सौम्या दिवि वांति वायवस्त्वमद्य बुद्धो नियतं भवि-
ष्यसि ॥११५॥

ततो भुजंगप्रवरेण संस्तुतस्तृणान्युपादाय शुचीनि लावकात् ।
कृतप्रतिज्ञो निषसाद बोधये महातरोर्मूलमुपाश्रितः शुचेः॥११६॥
ततः स पर्यंकमकंप्यमुत्तमं बबंध सुप्तोरगभोगपिंडितं ।
भिनद्मि तावद्भुवि नैतदासनं न यामि तावत्कृतकृत्यतामिति॥११७॥
ततो ययुर्मुदमतुलां दिवौकसो ववासिरे न मृगगणा न पक्षिणः ।
न सस्वनुर्वनतरवोऽनिलाहताः कृतासने भगवति निश्चला-
त्मनि ॥११८॥

इति श्रीबुद्धचरिते महाकाव्येऽश्वघोषकृतेऽराडदर्शनो
नाम द्वादशः सर्गः ॥१२॥

[1] Ex conj. पदस्वमेना° C, पदस्वामना° P [2] निस्तन° C P [3] Ex conj राजनि C P. [4] Ex conj ध्रुवत्वं C P [5] वायु P, चाय C, वाय seems used here for वि

# BOOK XIII

तस्मिंश्च बोधाय कृतप्रतिज्ञे राजर्षिवंशप्रभवे महर्षौ ।
तत्रोपविष्टे प्रजहर्ष लोकस्तत्रास सद्धर्मरिपुस्तु मारः ॥१॥
यं कामदेवं प्रवदंति लोके चित्रायुधं पुष्पशरं तथैव ।
कामप्रचाराधिपतिं तमेव मोक्षद्विषं मारमुदाहरंति ॥२॥
तस्यात्मजा विभ्रमहर्षदर्पास्तिस्रो रतिप्रीतितृषश्च कन्याः ।
पप्रच्छुरेनं मनसो विकारं स तांश्च ताश्चैव[1] वचो [2]बभाषे ॥३॥
असौ मुनिर्निश्चयवर्म[3] बिभ्रत् सत्त्वायुधं बुद्धिशरं विकृष्य ।
जिगीषुरास्ते विषयान्मदीयान् तस्मादयं मे मनसो विषादः[4] ॥४॥
यदि ह्यसौ मामभिभूय याति लोकाय चाख्यात्यपवर्गमार्गं[5] ।
शून्यस्ततोऽयं विषयो ममाद्य [6]वृत्ताच्च्युतस्येव[7] विदेहभर्तुः ॥५॥
तद्यावदेवैष न लब्धचक्षुर्मद्गोचरे तिष्ठति [8]यावदेव ।
यास्यामि तावद्व्रतमस्य भेत्तुं सेतुं नदीवेग इवाभिवृद्धः ॥६॥
ततो धनुः पुष्पमयं गृहीत्वा शरांस्तथा[9] मोहकरांश्च पंच ।
सोऽश्वत्थमूलं [10]संसुतोऽभ्यगच्छ[11]दस्वास्थ्यकारी मनसः प्रजानां ॥७॥

[1] Ex conj तांश्चैव C P [2] Ex conj भ्युभाष C, बभाष P [3] Ex conj °धर्म C P [4] विकारं C D, corrected in C to विषादः. [5] °मार्ग C, °मोक्षं P. [6] वृत्ताच्युतस्यैव P [7] °स्यैव C [8] कावदेव P [9] शरात्मगं C. [10] Ex conj सुसुतो C P [11] अस्वास्थ° C

अथ प्रशांतं मुनिमासनस्थं पारं तितीर्षुं भवसागरस्य ।
विषज्य [1]सव्यं करमायुधाग्रे क्रीडञ्शरेणेदमुवाच मारः ॥८॥
उत्तिष्ठ भोः [2]क्षत्रिय मृत्युभीत वरस्व धर्मं त्यज मोक्षधर्मं ।
वाणैश्च * * *[3] विनीय लोकान् लोकान् परान् प्राप्नुहि
वासवस्य ॥९॥
पंथा हि निर्यातुमयं यशस्यो[4] यो वाहितः पूर्वतमैर्नरेंद्रैः ।
जातस्य राजर्षिकुले विशाले [5]भैक्षाकमश्लाघ्यमिदं प्रपत्तुं ॥१०॥
अथाद्य [6]नोत्तिष्ठसि निश्चितात्मा[7] भव स्थिरो मा विमुचः प्रतिज्ञां।
मयोद्यतो ह्येष [8]शरः स एव यः सूर्यके मीनरिपौ विमुक्तः ॥११॥
पृष्टः स चानेन कथंचिदैडः सोमस्य नप्ताप्यभवद्विचित्तः ।
स चाभवच्छांतनुरस्वतंत्रः क्षीणे युगे किं वत दुर्बलोऽन्यः ॥१२॥
तत्क्षिप्रमुत्तिष्ठ लभस्व संज्ञां वाणो ह्ययं तिष्ठति लेलिहानः ।
प्रियाभिधेयेषु रतिप्रियेषु यं चक्रवाकेष्वपि नोत्सृजामि ॥१३॥
इत्येवमुक्तोऽपि यदा निरास्थो नैवासनं शाक्यमुनिर्बिभेद ।
शरं ततोऽस्मै विससर्ज मारः कन्याश्च कृत्वा पुरतः सुतांश्च ॥१४॥
तस्मिंस्तु वाणेऽपि स विप्रमुक्ते चकार नास्थां न धृतेश्चचाल ।
दृष्ट्वा तथैनं विषसाद मारश्चिंतापरीतश्च शनैर्जगाद ॥१५॥
शैलेंद्रपुत्रीं प्रति येन विद्धो देवोऽपि[9] शंभुश्चलितो बभूव ।
न चिंतयत्येष तमेव वाणं किं स्यादचित्तो न शरः स एषः ॥१६॥

[1] सव्यकरं C [2] चेत्रिय C [3] ...atus here in C P [4] यसस्यो C.
[5] भैच्याकं C [6] Ex conj. नो तिष्ठसि C P. [7] °तात्मना C. [8] मरः C
[9] Ex conj देयश्चि C देयश्चि P

तस्मादयं नार्हति[1] पुष्पबाणं न हर्षणं नापि [2]रतेर्नियोगं।
अर्हत्ययं भूतगणैरशेषैः संत्रासनातर्जनताडनानि ॥१७॥
सस्मार मारश्च ततः स्वसैन्यं [3]विध्वंसनं [4]शाक्यमुनेश्चिकीर्षन्।
नानाश्रयाश्चानुचराः परीयुः [5]शरद्रुमप्रासगदासिहस्ताः ॥१८॥
वराहमीनाश्वखरोष्ट्रवक्त्रा व्याघ्रर्क्षसिंहद्विरदाननाश्च।
एकेक्षणा नैकमुखास्त्रिशीर्षा लंबोदराश्चैव पृषोदराश्च ॥१९॥
अजानु सक्था घटजानवश्च दंष्ट्रायुधाश्चैव नखायुधाश्च।
कबंधहस्ता बहुमूर्तयश्च भग्नार्धवक्त्राश्च महामुखाश्च ॥२०॥
ताम्रारुणा लोहितबिंदुचित्राः खट्वांगहस्ता हरिधूम्रकेशाः।
लंबस्रजो वारणलंबकर्णाश्चर्मांबराश्चैव निरंबराश्च ॥२१॥
श्वेतार्धवक्त्रा हरितार्धकायास्ताम्राश्च धूम्रा[6] हरयोऽसिताश्च।
व्याडोत्तरासंगभुजास्तथैव प्रघुष्टघंटाकुलमेखलाश्च ॥२२॥
तालप्रमाणाश्च[7] गृहीतशूला दंष्ट्राकरालाश्च शिशुप्रमाणाः[8]।
उरभ्रवक्त्राश्च विहंगमाश्च मार्जारवक्त्राश्च मनुष्यकायाः ॥२३॥
प्रकीर्णकेशाः शिखिनोऽर्धमुंडा रज्ज्वंबरा व्याकुलवेष्टनाश्च।
प्रहृष्टवक्त्रा भृकुटीमुखाश्च तेजोहराश्चैव मनोहराश्च ॥२४॥
केचिद्व्रजंतो भृशमाववल्गुरन्योऽन्यमापुप्लुविरे[9] तथान्ये।
चिक्रीडुराकाशगताश्च केचित्केचिच्च चेरुस्तरुमस्तकेषु ॥२५॥
ननर्त कश्चिद्भ्रमयंस्त्रिशूलं [10]कश्चिद्ध पुस्फूर्ज गदां विकर्षन्।

[1] Ex conj °सि C P [2] रतो नियोगं C [3] विध्वंशनं P, विघ्नं समे C [4] शाक्यमुने चि° C [5] - - लद्रुमप्राश° C [6] धूम्रहरयो C P [7] प्रमानाश्च C [8] °प्रमानाः C [9] Ex conj. °प्लुतिरे C P [10] Ex conj. कश्चिद्व C P

हर्षेण कश्चिद्वृषवन्ननर्त कश्चित्प्रजज्वाल तनूरुहेभ्यः ॥२६॥
एवंविधा भूतगणाः समंतात्[1]तद्बोधिमूलं परिवार्य तस्थुः ।
जिघृक्षवश्चैव[2] जिघांसवश्च भर्तुर्नियोगं परिपालयंतः ॥२७॥
तं प्रेक्ष्य मारस्य च पूर्वरात्रे शाक्यर्षभस्यैव च युद्धकालं ।
न द्यौश्चकाशे पृथिवी चकंपे [3]प्रजज्वलुश्चैव दिशः सशब्दाः ॥२८॥
विष्वग्ववौ वायुरुदीर्णवेगस्तारा न रेजुर्न बभौ शशांकः ।
तमश्च भूयो विततार रात्रेः[4] सर्वे च संचुक्षुभिरे समुद्राः ॥२९॥
महीभृतो धर्मपराश्च नागा [5]महामुनेर्विघ्नममृष्यमाणाः ।
मारं प्रति क्रोधविवृत्तनेत्रा [6]निःशश्वसुश्चैव जजृंभिरे च ॥३०॥
शुद्धाधिवासा विबुधर्षयस्तु सद्धर्मसिद्ध्यर्थमिव प्रवृत्ताः ।
मारेऽनुकंपां[7] मनसा प्रचक्रुर्विरागभावात्तु न रोषमीयुः ॥३१॥
तद्बोधिमूलं समवेक्ष्य[8] कीर्णं हिंसात्मना मारबलेन तेन ।
धर्मात्मभिर्लोकविमोक्षकामैर्बभूव हाहाकृतमंतरीक्षं ॥३२॥
उपप्लुतं धर्मविदस्तु[9] तस्य दृष्ट्वा स्थितं मारबलं महर्षिः ।
न चुक्षुभे नापि ययौ विकारं मध्ये गवां सिंह इवोपविष्टः ॥३३॥
मारस्ततो भूतचमूमुदीर्णामाज्ञापयामास भयाय तस्य ।
स्वैः स्वैः प्रभावैरथ सास्य सेना तद्धैर्यभेदाय मतिं चकार ॥३४॥
केचिच्चलन्नैकविलंबिजिह्वा[10]स्तीक्ष्णोग्रदंष्ट्रा हरिमंडलाक्षाः ।

[1] Ex conj. (cf sloka 32) तं वो° C P. [2] °श्चापि P [3] प्रज्वज्वलुः C
[4] C omits : [5] महामुनिर्वि° C [6] निश्श्व° C, विनिश्वसु° P. [7] °कंपा C P
[8] समवीच्य C P. [9] C omits द in °विदस्. [The Tibetan reads धर्मनिधेः]
[10] °जिह्वा ती° C P

विदारितास्याः स्थिरशंकुकर्णाः[1] संत्रासयंतः किल नाम तस्थुः ॥३५॥
तेभ्यः स्थितेभ्यः स तथाविधेभ्यो रूपेण[2] भावेन च दारुणेभ्यः ।
न विव्यथे नोद्विविजे महर्षिः क्रीडन् सुबालेभ्य इवोद्धतेभ्यः ॥३६॥
कश्चित्ततो रौद्रविवृत्तदृष्टिस्तस्मै गदामुद्यमयांचकार ।
तस्तंभ बाहुः सगदस्ततोऽस्य पुरंदरस्येव[3] पुरा सवज्रः ॥३७॥
केचित्समुद्यम्य[4] [5]शिलास्तरूंश्च विषेहिरे नैव मुनौ विमोक्तुं ।
पेतुः सवृक्षाः सशिलास्तथैव वज्रावभग्ना इव विंध्यपादाः ॥३८॥
कैश्चित्समुत्पत्य नभो विमुक्ताः शिलाश्च वृक्षाश्च परश्वधाश्च ।
तस्थुर्नभस्येव [6]न चावपेतुः संध्याभ्रपादा इव नैकवर्णाः ॥३९॥
चिक्षेप तस्योपरि दीप्तमन्यः कडंगरं पर्वतशृंगमात्रं ।
यन्मुक्तमात्रं [7]गगणस्थमेव तस्यानुभावाच्छतधा बभूव[8] ॥४०॥
कश्चिज्ज्वलन्नर्क इवोदितः खादंगारवर्षं महदुत्ससर्ज ।
चूर्णानि चामीकरकंदराणां कल्पात्यये मेरुरिव प्रदीप्तः ॥४१॥
तद्बोधिमूले प्रतिकीर्यमाणमंगारवर्षं तु सविस्फुलिंगं ।
मैत्रीविहारादृषिसत्तमस्य बभूव रक्तोत्पलपत्त्रवर्षः ॥४२॥
शरीरचित्तव्यसनातपैस्तैरेवंविधैस्तैश्च निपात्यमानैः[9] ।
नैवासनाच्छाक्यमुनिश्चचाल स्वं निश्चयं बंधुमिवोपगुह्य ॥४३॥
अथापरे [10]निर्जगलुर्मुखेभ्यः सर्पान्विजीर्णेभ्य इव द्रुमेभ्यः ।
ते मंत्रबद्धा इव तत्समीपे न [11]शश्वसुर्नोत्ससृजुर्न चेलुः ॥४४॥

[1] °वर्णाः P [2] रूपेन C [3] °स्यैव C P [4] Ex conj समुद्दम्य C P
[5] शिलातरूंश्च C P [6] Ex conj च नाव° C P. [7] गगन° P [8] वफाल
written under बभूव in C P. [9] Ex conj. निपत्यमानैः C P. [10] निर्जगिलुः C
[11] सस्वसुः C

भूत्वापरे वारिधरा[1] बृहंतः सविद्युतः साशनिचंडघोषाः ।
तस्मिन् द्रुमे तत्यजुरश्मवर्षं तत्पुष्पवर्षं रुचिरं बभूव ॥४५॥
चापेऽथ बाणो निहितोऽपरेण[2] जज्वाल तत्रैव न निष्पपात ।
अनीश्वरस्यात्मनि धूयमाणो[3] दुर्मर्षणस्येव[4] नरस्य मन्युः ॥४६॥
पंचेषवोऽन्येन तु विप्रमुक्तास्तस्थुर्नयत्येव मुनौ न पेतुः ।
संसारभीरोर्विषयप्रवृत्तौ पंचेंद्रियाणीव परीक्षकस्य ॥४७॥
जिघांसयान्यः प्रससार रुष्टो गदां गृहीत्वाभिमुखो महर्षेः ।
सोऽप्राप्तकालो विवशः पपात[5] दोषेष्विवानर्थकरेषु लोकः ॥४८॥
स्त्री मेघकाली तु कपालहस्ता कर्तुं महर्षेः किल मोहचित्तं ।
बभ्राम तत्रानियतं न तस्थौ चलात्मनो बुद्धिरिवागमेषु ॥४९॥
कश्चित्प्रदीप्तं प्रणिधाय चक्षुर्नेत्राग्निनाशीविषवद्दिधक्षुः[6] ।
तत्रैव नासीनमृषिं ददर्श कामात्मकः श्रेय इवोपदिष्टं ॥५०॥
[7] गुर्वीं शिलामुद्यमयंस्तथान्यः शश्राम मोघं[8] विहतप्रयत्नः ।
निःश्रेयसं ज्ञानसमाधिगम्यं कायक्लमैर्धर्ममिवाप्तुकामः ॥५१॥
तरक्षुसिंहाकृतयस्तथान्ये प्रणेदुरुच्चैर्महतः प्रणादान् ।
सत्त्वानि यैः[9] संचुकुचुः समंताद्वज्राहता द्यौः फलतीति मत्वा ॥५२॥
मृगा गजाश्चार्त्तरवान्[10] सृजंतो विदुद्रुवुश्चैव निलिल्यिरे च ।
रात्रौ च तस्यामहनीव दिग्भ्यः खगा रुवंतः परिपेतुरार्त्ताः ॥५३॥
तेषां प्रणादैस्तु तथाविधैस्तैः सर्वेषु भूतेष्वपि कंपितेषु ।

[1] वारिधरान् C P [2] निहतो C. [3] ०मानो C [4] ०स्यैव C
[5] देवेष्विव P [6] Ex conj ०वद्दिधक्षु C P [7] गुर्वी C P. [8] मौघं C P.
[9] Sic D, येः C, यः P [10] आत्तरवान् C P

मुनिर्न तत्रास न संचुकोच रवैर्गरुत्मानिव वायसानां ॥५४॥
भयावहेभ्यः परिषद्गणेभ्यो यथा यथा नैव मुनिर्बिभाय।
तथा तथा धर्मभृतां सपत्नः शोकाच्च रोषाच्च ससार मारः॥५५॥
भूतं ततः किंचिददृश्यरूपं विशिष्टरूपं गगणस्थमेव।
[1]दृष्ट्वर्षये द्रुग्धमवैररुष्टं मारं बभाषे महता स्वरेण ॥५६॥
मोघं श्रमं नार्हसि मार कर्तुं हिंस्रात्मतामुत्सृज गच्छ शर्म।
नैष त्वया कंपयितुं हि शक्यो महागिरिर्मेरुरिवानिलेन ॥५७॥
अप्युष्णभावं ज्वलनः[2] प्रजह्यादापो द्रवत्वं पृथिवी स्थिरत्वं।
अनेककल्पाचितपुण्यकर्मा न त्वेव जह्याद्व्यवसायमेषः ॥५८॥
यो निश्चयो ह्यस्य पराक्रमश्च तेजश्च यद्या च दया प्रजासु।
अप्राप्य नोत्थास्यति[3] तत्त्वमेष तमांस्यहत्वेव सहस्ररश्मिः ॥५९॥
काष्ठं हि मथ्नन् लभते हुताशं भूमिं खनन् विंदति[4] चापि तोयं।
निर्बंधिनः[5] किंच न नास्य साध्यं न्यायेन युक्तं च कृतं च सर्वं ॥६०॥
तल्लोकमार्त्तं करुणायमानो रोगेषु रागादिषु वर्तमानं।
महाभिषग्नार्हति विघ्नमेष ज्ञानौषधार्थं परिखिद्यमानः ॥६१॥
हृते च लोके बहुभिः कुमार्गैः सन्मार्गमन्विच्छति यः श्रमेण।
स [6]दैशिकः क्षोभयितुं न युक्तं सुदेशिकः सार्थ इव प्रणष्टे ॥६२॥
सत्त्वेषु नष्टेषु महांधकारैर्ज्ञानप्रदीपः क्रियमाण[7] एषः।
आर्यस्य निर्वापयितुं न साधु प्रज्वाल्यमानस्तमसीव दीपः ॥६३॥

[1] दृष्ट्वार्षये C P. [2] ०न C [3] नोच्छास्यति C [4] विदन्ति C
[5] निर्वैधनः P [6] देशिकः P [7] ०न C

दृष्ट्वा च संसारमये महौघे[1] मग्नं जगत्पारमविंदमानं ।
यश्चेदमुत्तारयितुं प्रवृत्तः कश्चिन्नयेत्तस्य तु पापमार्यः ॥ ६४ ॥
क्षमाशिफो धैर्यविगाढमूलश्चारित्रपुष्पः स्मृतिबुद्धिशाखः ।
ज्ञानद्रुमो धर्मफलप्रदाता नोत्पाटनं ह्यर्हति वर्धमानः ॥ ६५ ॥
बद्धां दृढैश्चेतसि मोहपाशैर्यस्य प्रजां मोक्षयितुं मनीषा ।
तस्मिन् जिघांसा तव नोपपन्ना श्रांते जगद्बंधनमोक्षहेतोः ॥ ६६ ॥
बोधाय कर्माणि हि यान्यनेन कृतानि तेषां नियतोऽद्य कालः ।
स्थाने [2]तथास्मिन्नुपविष्ट एष यथैव पूर्वे मुनयस्तथैव ॥ ६७ ॥
एषा हि नाभिर्वसुधातलस्य कृत्स्नेन युक्ता परमेण[3] धाम्ना ।
भूमेरतोऽन्योऽस्ति हि न प्रदेशो वेशं[4] समाधेर्विषयो [5]हितस्य ॥ ६८ ॥
तन्मा कृथाः[6] शोकमुपेहि[7] शांतिं मा भून्महिम्ना तव मार मानः ।
[8]विश्रंभितुं न क्षममध्रुवा श्रीश्चले पदे किं पदमभ्युपैषि[9] ॥ ६९ ॥
ततः स संश्रुत्य च तस्य तद्वचो महामुनेः प्रेक्ष्य च निष्प्रकंपतां ।
जगाम मारो विमना हतोद्यमः[10] शरैर्जगच्चेतसि यैर्विहन्यसे[11] ॥ ७० ॥
गतप्रहर्षा विफलीकृतश्रमा प्रविद्धपाषाणकडंगरद्रुमा ।
दिशः प्रदुद्राव ततोऽस्य सा चमूर्हताश्रयेव द्विषता[12] द्विषच्चमूः ॥ ७१ ॥
द्रवति [13]सपरपक्षे निर्जिते पुष्पकेतौ जयति जिततमस्के नीरजस्के
महर्षौ ।

[1] महोघे C. [2] स्थितास्मिन् P. [3] परमेन C P [4] Sic C P
[5] -- स्य C [6] क्षथा C P [7] उपैहि ι [8] विस्रभितुं C [9] Ex conj
भ्युपैमि C P [10] Ex conj. भतोद्यमः C P [11] Sic C P. [12] °चो P
[13] Ex conj सपरिपच्चे C P

युवतिरिव सहासा द्यौश्चकाशे[1] सचंद्रा सुरभि च जलगर्भे[2] पुष्पवर्षं
पपात ॥७२॥

तथापि पापीयसि निर्जिते गते दिशः[3] प्रसेदुः प्रबभौ निशाकरः।
दिवो निपेतुर्भुवि पुष्पवृष्टयो रराज योषेव[4] विकल्मषा निशा॥७३॥

इति श्रीबुद्धचरिते महाकाव्येऽश्वघोषकृते मारविजयो
नाम त्रयोदशः सर्गः ॥१३॥

[1] द्यौ चकाशि C [2] जलवगर्भे C. [3] देशः P [4] योषैव C P

# BOOK XIV.

ततो मारबलं जित्वा धैर्येण च शमेन च ।
परमार्थं विजिज्ञासुः स दध्यौ ध्यानकोविदः ॥१॥
सर्वेषु ध्यानविधिषु प्राप्य चैश्वर्यमुत्तमं[1] ।
सस्मार प्रथमे यामे पूर्वजन्मपरंपरां ॥२॥
अमुत्राहमयं नाम[2] च्युतस्तस्मादिहागतः ।
इति जन्मसहस्राणि सस्मारानुभवन्निव ॥३॥
स्मृत्वा जन्म च मृत्युं च तासु तासूपपत्तिषु ।
ततः सत्त्वेषु कारुण्यं चकार करुणात्मकः ॥४॥
कृत्वेह[3] सुजनोत्सर्गं पुनरन्यत्र च क्रियाः[4] ।
अत्राणः खलु लोकोऽयं परिभ्रमति चक्रवत् ॥५॥
इत्येवं [5]स्मरतस्तस्य बभूव नियतात्मनः ।
कदलीगर्भनिःसारः संसार इति निश्चयः[6] ॥६॥
द्वितीये त्वागते[7] यामे सोऽद्वितीयपराक्रमः ।
दिव्यं चक्षुः परं लेभे सर्वचक्षुष्मतां वरः ॥७॥
ततस्तेन स दिव्येन परिशुद्धेन चक्षुषा ।
ददर्श निखिलं लोकमादर्शे इव निर्मले ॥८॥

[1] ॰मः C   [2] नामा C P.   [3] Ex conj हत्वेहं C P   [4] क्रिया C P.
[5] स्मारतः C.   [6] निश्चितः P.   [7] त्वागमे C

सत्त्वानां पश्यतस्तस्य निकृष्टोत्कृष्टकर्मणां ।
प्रच्युतिं चोपपत्तिं च ववृधे करुणात्मता ॥९॥
इमे दुष्कृतकर्माणः प्राणिनो यांति दुर्गतिं ।
इमेऽन्ये शुभकर्माणः प्रतिष्ठंते त्रिपिष्टपे ॥१०॥
उपपन्नाः[1] प्रतिभये नरके भृशदारुणे ।
अमी दुःखैर्बहुविधैः पीड्यंते कृपणं वत ॥११॥
पाय्यंते क्वथितं केचिदग्निवर्णमयोरसं ।
आरोप्यंते रुवंतोऽन्ये [2]निष्टप्तस्तंभमायसं ॥१२॥
पच्यंते पिष्टवत्केचिदयस्कुंभीष्ववाङ्मुखाः ।
दह्यंते करुणं केचिद्दीप्तेष्वंगारराशिषु ॥१३॥
केचित्तीक्ष्णैरयोदंष्ट्रैर्भक्ष्यंते[3] दारुणैः श्वभिः ।
केचिद्धृष्टैरयस्तुंडैर्वायसैरायसैरिव ॥१४॥
केचिद्दाहपरिश्रांताः शीतच्छायाभिकांक्षिणः ।
[4]असिपत्रं वनं नीलं बद्धा इव [5]विशंत्यमी ॥१५॥
पाट्यंते दारुवत् केचित्कुठारैर्बहुबाहवः ।
दुःखेऽ[6]पि न विपद्यंते कर्मभिर्धारितासवः[7] ॥१६॥
सुखं स्यादिति यत्कर्म कृतं दुःखनिवृत्तये[8] ।
फलं तस्येदमवशैर्दुःखमेवोपभुज्यते ॥१७॥
सुखार्थमशुभं कृत्वा य एते भृशदुःखिताः ।

[1] C omits :.  [2] निस्तप्त° C P  [3] भच्चते C P  [4] Ex conj. असिपत्रवन-नीलबद्धा C P (P °वने°).  [5] विसं° P.  [6] – निपिपद्यंते C  [7] °ताश्रवः C P
[8] Ex conj °निवर्त्तये C P.

[1]आस्वादः स किमेतेषां करोति सुखमण्वपि[2] ॥१८॥
हसद्भिर्यत्कृतं कर्म कलुषं कलुषात्मभिः ।
एतत्परिणते काले क्रोशद्भिरनुभूयते ॥१९॥
यद्येव पापकर्माणः पश्येयुः[3] कर्मणां फलं ।
वमेयुरुष्णरुधिरं मर्मस्वभिहता इव ॥२०॥
शारीरेभ्योऽपि दुःखेभ्यो नारकेभ्यो मनस्विनः ।
अनार्यैः सह संवासो मम कृच्छ्रतमो मतः ॥२१॥
इमेऽन्ये कर्मभिश्चित्रैश्चित्तविस्पंदसंभवैः ।
तिर्यग्योनौ [4]विचित्रायामुपपन्नास्तपस्विनः ॥२२॥
मांसत्वग्वालदंतार्थं वैरादपि मदादपि ।
हन्यंते कृपणा यत्र बंधूनां पश्यतामपि ॥२३॥
अशक्नुवंतोऽप्यवशाः क्षुत्तर्षश्रमपीडिताः ।
[5]गोऽश्वभूताश्च वाह्यंते प्रतोदक्षतमूर्तयः ॥२४॥
वाह्यंते गजभूताश्च बलीयांसोऽपि दुर्बलैः ।
अंकुशक्लिष्टमूर्धानस्ताडिताः[6] पादपार्ष्णिभिः ॥२५॥
[7]सत्स्वप्यन्येषु दुःखेषु दुःखं यत्र विशेषतः ।
परस्परविरोधाच्च पराधीनतयैव च ॥२६॥
खस्थाः खस्थैर्हि बाध्यंते[8] जलस्था जलचारिभिः ।
स्थलस्थाः स्थलसंस्थैस्तु [9]प्राप्यंते चेतरेतरैः ॥२७॥

[1] आश्वादः C [2] Ex conj अन्वपि C [3] °षु C [4] Ex conj विचित्रायम् C, विचित्रोयम् P. [5] Ex conj गौश्व° C P [6] तादिता C
[7] सत्सुप्य° C [8] Ex conj वाह्यंते C D, corrected in C to वाध्यंते ; गाधन्ते P
[9] प्राप्यरे C प्राप्यते P

उपपन्नास्तथा चेमे[1] मात्सर्याक्रांतचेतसः ।
पितृलोके निरालोके कृपणं भुंजते फलं ॥२८॥
[2]सूचीछिद्रोपममुखाः पर्वतोपमकुक्षयः ।
क्षुत्तर्षजनितैर्दुःखैः पीड्यंते दुःखभागिनः ॥२९॥
पुरुषो यदि जानीत मात्सर्यस्येदृशं फलं ।
सर्वथा शिविवद्दद्याच्छरीरावयवानपि ॥३०॥
आशया समभिक्रांता धार्यमाणाः[3] स्वकर्मभिः ।
लभंते न ह्यमी भोक्तुं प्रवृद्धान्यशुचीन्यपि ॥३१॥
इमेऽन्ये नरकं [4]प्राप्य गर्भसंज्ञेऽशुचिह्रदे ।
उपपन्ना मनुष्येषु दुःखमर्छंति जंतवः ॥३२॥
अथान्ये तापसाः स्वर्गं गच्छंति पुण्यकारिणः[5] ।
चक्रवर्तिपदं प्राप्य केचिद्भूमौ चरंति च ॥३३॥
केचिन्नागालये[6] नागा निधानेश्वरतां गताः ।
स्वकृतं कर्म भुंजाना भ्रमंति भववारिधौ ॥३४॥
तद्रात्रेः पश्चिमे यामे ध्यात्वा चैवं व्यचिंतयत् ।
वतायं कृच्छ्रमापन्नो लोकः सर्वोऽपि विभ्रमन् ॥३५॥
निःसरणं न जानाति दुःखस्कंधालयाद्भवात् ।
यदुतेदं जगत्सर्वं जायते जीर्यतेऽपि च ॥३६॥
म्रियते च्यवते भूयोऽप्येवं समुपपद्यते ।
कस्मिन्सति जरामृत्युर्भवतीति स ऐक्षत ॥३७॥

[1] चैमे C [2] सू° C P [3] °ना: C P. [4] Ex conj पश्चेद्गर्भ° C P.
[5] °णा P [6] Sic C pr. m and D, केचिद्रसातले P, and so marginal correction in C

जात्यां सत्यां जरामृत्युर्भवतीति समैक्षत ।
कस्मिन्सति पुनर्जातिरिति चासौ व्यचारयत् ॥३८॥
[[1]भवे सति पुनर्जातिर्भवतीति समैक्षत ।
कस्मिन्सति भवोत्पत्तिरिति चासौ व्यचारयत् ॥३९॥]
उपादाने भवोत्पत्तिरित्येवं स व्यबुध्यत ।
कस्मिन्सति ह्युपादानमिति चासौ व्यचारयत् ॥४०॥
तृष्णायामिति विज्ञाय पुनरेवं[2] व्यचिंतयत् ।
कस्मिन्सति च तृष्णा हि जातेति स व्यचारयत् ॥४१॥
वेदनायां समुद्भूता तृष्णेति स समैक्षत[3] ।
कस्मिन्सति च संजाता वेदनेति व्यचारयत् ॥४२॥
स्पर्शे सति समुद्भूता वेदनेति [4]समैक्षत ।
कस्मिन्सति च संजातः स्पर्शोऽपीति [5]व्यचारयत् ॥४३॥
षडायतन उत्पन्नः स्पर्शो हीति [3]समैक्षत ।
षडायतनमुत्पन्नं कुत्रेति स व्यचिंतयत् ॥४४॥
नामरूपे समुत्पन्नमिति चासौ व्यबुध्यत ।
नामरूपं [6]कुहोत्पन्नमिति चापि व्यचिंतयत् ॥४५॥
विज्ञाने हि समुत्पन्नमिति च समपश्यत ।
विज्ञानं च कुहोत्पन्नमिति स समचिंतयत् ॥४६॥
संस्कारेषु [7]समुत्पन्नमिति च समबुध्यत ।

[1] This sloka omitted in C P It has been c tually supplied
[2] एव C
[3] समैच्छत C
[4] समैच्छत C P
[5] ।ग्चारयन् C
[6] Sic C P
[7] समुद्भूतं C

संस्काराश्च कुहोत्पन्ना इति ध्यात्वा विचारयन्[1] ॥४७॥
अविद्यायां समुत्पन्ना इति सम्यगबुध्यत ।
इत्येवं स महाप्राज्ञो बोधिसत्त्वो मुनीश्वरः ॥४८॥
मत्वैवं च समाधाय ध्यात्वैवं समचिंतयत् ।
अविद्यायाः समुत्पन्नाः संस्काराः प्रचरंत्यपि ॥४९॥
संस्कारवृत्तिसंजातं विज्ञानं संप्रवर्तते ।
विज्ञानं नामरूपस्य संपरीक्ष्य[1] प्रवर्तते ॥५०॥
नामरूपे समुत्पन्नं षडायतनमुच्चरेत् ।
षडायतनसंस्पर्शाद्वेदना संप्रजायते ॥५१॥
वेदनायाः समुत्पन्ना तृष्णाभिसंप्रवर्तते ।
तृष्णोद्गतमुपादानमुपादानभवो भवः ॥५२॥
भवे जातिः समुत्पन्ना जातेर्जरारुजादयः ।
जरारोगाग्निसंतप्तं[2] मृत्युना[3] ग्रस्यते जगत् ॥५३॥
मृत्योः शोकाग्निसंतप्ते महद्दुःखं प्रजायते ।
एवमस्य महद्दुःखस्कंधस्याभ्युदयो ह्ययं ॥५४॥
इत्येवं स महासत्त्वः परिज्ञायाभिबोधितः ।
भूयोऽपि च समाधाय ध्यात्वैवं समचिंतयत् ॥५५॥
जरारोगनिरोधाद्धि मृत्युरपि निरुध्यते ।
जातेर्हि संनिरोधाच्च जरारोगो निरुध्यते ॥५६॥
भववृत्तिनिरोधाद्धि [4]जातिरपि निरोधिता[5] ।

[1] Sic C P (?) [2] °तप्ते C P. [3] मृत्युरा C P [4] जातेरपि C P.
[5] °धता P

उपादाननिरोधाच्च भववृत्तिर्निरोधिता[1] ॥५७॥
तथा तृष्णानिरोधाच्च ह्युपादानं निरुध्यते ।
वेदनाया निरोधाच्च तृष्णापि नापि जायते ॥५८॥
स्पर्शे निरुध्यमाने हि वेदना नैव जायते ।
षडिंद्रियनिरोधाच्च संस्पर्शोऽपि न जायते ॥५९॥
नामरूपनिरोधाच्च षडिंद्रियं निरुध्यते ।
विज्ञानसंनिरोधाच्च नामरूपं निरुध्यते ॥६०॥
संस्कारसंनिरोधाच्च विज्ञानं नाभिवर्तते ।
अविद्यासंनिरोधाच्च संस्काराः प्रभवंति न ॥६१॥
एवमस्य महद्दुःखस्कंधस्य मूलमुच्यते ।
अविद्या सर्वबुद्धैस्तन्निरोध्या मुक्तिवांछिभिः ॥६२॥
तदविद्यानिरोधाद्धि सर्वेषां भवचारिणां ।
सर्वाण्यपि च दुःखानि निरुद्धानि चरंति न ॥६३॥
एवं विज्ञाय विज्ञोऽसौ बोधिसत्त्वोऽभिबोधितः ।
भूयोऽप्येवं समालोक्य ध्यात्वा च समचिंतयत् ॥६४॥
इदं दुःखमयं दुःखसमुदयो जगत्स्वपि ।
अयं दुःखनिरोधोऽपि चेयं निरोधगामिनी ।
प्रतिपदिति विज्ञाय यथाभूतमबुध्यत ॥६५॥
एवं स भगवांस्तत्र द्रुममूले तृणासने ।
समाश्रित्य स्वयं ध्यात्वा संबोधिमभ्यगच्छत ॥६६॥
ततो भिंदन्नविद्यांडं संप्राप्य प्राप्तसंविदः ।

[1] निरोधता P

संबोधिपाक्षिकान्धर्मान् सर्वान्समभिप्राप्तवान् ॥६७॥
संबुद्धो भगवानर्हन् धर्मराजस्तथागतः ।
सर्वाकारज्ञताप्राप्तः सर्वविद्याधिपोऽभवत् ॥६८॥
तत्समीक्ष्य सुराः खेस्था मिथश्चैवं बभाषिरे ।
अवकिरत पुष्पाणि संबुद्धेऽस्मिन्मुनीश्वरे ॥६९॥
पूर्वमुनींद्रवृत्तिज्ञाश्चान्येऽ[1]मरा बभाषिरे ।
तावन्मा [2]किरत पुष्पाणि निमित्तं नाभिदर्शितं ॥७०॥
बुद्धोऽथो खे सप्ततालमात्रे सिंहासनस्थितः ।
निर्मितान् बोधिसत्त्वांस्तानभ्यभाषत भासयन् ॥७१॥
भो भो भवंतः शृण्वंतु बोधिप्राप्तस्य मे[3] वचः ।
पुण्यैः संसिध्यते[4] सर्वं तत्पुण्यं चिनुताभवं[5] ॥७२॥
यदहं [6]प्राचरं दाता शुद्धशीलः क्षमी कृती ।
ध्यानी प्राज्ञश्च तैः पुण्यैर्बोधिसत्त्वोऽभवं सदा[7] ॥७३॥
सर्वं संबोधिसंभारं पूरयित्वा यथाक्रमं ।
सांप्रतं बोधिमासाद्य संबुद्धोऽर्हन् जिनोऽभवं ॥७४॥
तथा मे प्रणिधिः सिद्धा[2] तज्जन्म सफलं मम ।
यत्प्राप्तं पूर्वकैर्बुद्धैर्ज्ञानं भद्रामृतं च मे ॥७५॥
सद्धर्मतो यथा सत्त्वहितं कृतं तथा मया ।
आश्रवा मे परिक्षीणा दुःखानामंतकोऽस्मि हि[8] ॥७६॥
निर्मलात्मा प्रेषयेऽहं धर्मदीपैर्जगत्त्रयं ।

[1] ०ज्ञा अन्ये C [2] Sic C P [3] से C [4] संशुध्यते C. [5] Sic C P
[6] प्रावर P [7] भवे P [8] ऽस्यह P (अस्यहं ?)

इत्याज्ञपंतमभ्यर्च्य तेऽन्तर्दधुर्जिनात्मजाः ॥७७॥
देवास्तेऽथ मुदा दिव्यैः पुष्पैरर्च्य ववंदिरे[1] ।
मुनींद्रे चाथ संबुद्धेऽभवच्छुभमयं जगत् ॥७८॥
ततोऽवतीर्य भगवांस्तस्मिन् वृक्षासने स्थितः ।
संबोधिमिह प्राप्तोऽस्मीति सप्ताहं व्यलंघयत् ॥७९॥
बोधिसत्त्वेन संप्राप्ते सर्वज्ञत्वे महासुखाः ।
सत्त्वा आसन्[2] महत्तेजोभासिता लोकधातवः ॥८०॥
प्रचचाल मही सद्भिः[3] षड्ढा नारीव हर्षिता ।
स्वस्वालया बोधिसत्त्वास्तं तुष्टुवुः समागताः ॥८१॥
उत्पन्नः सर्वसत्त्वाग्र्यः सर्वज्ञोऽर्हन् विचक्षणः ।
[4]ज्ञानतडागसंभूतः पद्मोऽलिप्तो रजोमलैः ॥८२॥
मेघः क्षमाजलवहः सद्धर्मामृतवर्षकः ।
वर्धिष्णुः पुण्यबीजानां भैषज्यांकुररोहणः ॥८३॥
[5]शतकोटिमारजिष्णुरे[6]कक्ष[7]मास्त्रधारकः ।
चिंतामणिः कल्पतरुर्भद्रघटश्च कामधुक् ॥८४॥
मोहांधकारजिद्भास्वानिंदुः क्लेशादितापहृत् ।
नमस्तेऽस्तु नमस्तेऽस्तु नमस्तेऽस्तु तथागत ॥८५॥
नमस्ते सर्वलोकेश नमस्ते दशपारग ।
नमस्ते पुरुषवीर धर्मराज नमोऽस्तु ते ॥८६॥
स्तुत्वा नत्वा समभ्यर्च्य प्रत्याययुः स्वमाश्रमं ।

[1] पुष्पैरभ्यर्च्य वंदिरे P [2] आसन् सत्त्वा । [3] Ex conj साद्भिः C P
[4] ज्ञानसरसि C [5] शतकोटी C P [6] एकः C P. [7] क्षमास्त्र° C

बहु[1] प्रदक्षिणीकृत्य वर्णनामनुवर्णयन् ॥८७॥
अथ कामावचराश्च शुद्धावासाश्च भास्वराः ।
ब्रह्मकायिकदेवाश्च मारात्मजाः सुपाक्षिकाः ॥८८॥
परनिर्मितवशवर्तिनिर्माणरतयस्तथा ।
तुषिता यामास्त्वं[2]यस्त्रिंशद्देवा लोकाधिपाः परे ॥८९॥
अंतरीक्षचरा देवा [3]भूमिचरा वनेचराः ।
स्वस्वाधिपतिसंयुक्ता बोधिमंडपमाययुः ॥९०॥
स्वस्वाधिकरणोपेतैः पूजांगैरर्च्य तं जिनं ।
स्वस्वबुद्ध्य[4]नुसारैश्च स्तोत्रैः स्तुत्वा ययुर्गृहं ॥९१॥

इति श्रीबुद्धचरिते महाकाव्येऽश्वघोषकृतेऽभिसंबोधनसंस्तवनं[5] नाम चतुर्दशः सर्गः ॥१४॥

[1] बहुशः C [2] त्रायस्त्रिंशद्देवा C P [3] भूमी° C. [4] °बुद्धानुसारैश्च P
[5] °न C, संस्तव P

# BOOK XV.

प्रत्यहमथ संबुद्धः स्तूयमानः सुरादिभिः ।
प्रीत्याहाराभिधं सप्ताहमेवं तदलंघयत् ॥१॥
द्वैतीयकं च सप्ताहं बोधिसत्त्वादिभिः सुरैः ।
अभिषिच्यमानः पूर्णाबुकलशैरभ्यलंघयत् ॥२॥
तार्तीयिमथ सप्ताहं सागरेषु चतुर्षु सः ।
स्नात्वा भद्रासनासीनोऽलंघयद्दृष्टिबंधकृत् ॥३॥
चातुर्थिके च सप्ताहे [1]ह्यनेकाकृतिमाचरन् ।
वैनेयसत्त्वमुद्धृत्य तस्थौ भद्रासने कृती ॥४॥
समंतकुसुमाभिज्ञो देवः पुष्पोपहारकः ।
कृतांजलिर्महाबुद्धं व्यजिज्ञपत् [2]कृतासनं ॥५॥
किं नाम भगवन्नस्य समाधेर्येन संयुतः ।
चतुःसप्ताहमेवं त्वं ध्यात्वा विहरसे मुदा ॥६॥
अयं देव महाप्रीत्याहारव्यूहो निगद्यते ।
यथाभिषिक्तो नृपतिः शत्रुजित्स्वस्तिमानहो ॥७
इत्युक्त्वा पुनरप्याह दशबलः प्रमोदितः ।
अतीता अपि संबुद्धा द्रुमराजं त्यजंति न ॥८॥

[1] अनेका॰ C [2] Omitted in P

इह क्लेशाश्च माराश्च साविद्याः साश्रवा मया ।
जिता बोधिश्च संप्राप्ता जगदुद्धरणक्षमा ॥९॥
अहमप्येव[1] बुद्धानां शिक्षानुचरणोद्यतः ।
चतुःसप्ताहमवसं[2] त्वभिषेकादिकार्यतः ॥१०॥
मारो ऽथो[3] ऽतिविषण्णात्मा व्यजिज्ञपत्तथागतं ।
भवान् निर्वातु भगवन् पूर्णास्तव मनोरथाः ॥११॥
बोधौ लोकान् प्रतिष्ठाप्य निर्वास्ये बालुकोपमान् ।
इत्याज्ञप्तं तं क्रुश्य मारः स्वभुवनं ययौ ॥१२॥
अथ मारात्मजास्तिस्रो रतिस्तृष्णा च आरतिः ।
भिन्नास्यं पितरं बोध्य तथागतमुपासरन् ॥१३॥
रतिस्त्वेंदुवदना मोहविद्यास्वलंकृता[4] ।
मोहयामास[5] तैस्तैस्तं गार्हस्थ्यसुखशंसनैः[6] ॥१४॥
चक्रवर्तिसुखं त्यक्त्वा किं दीनं सुखमाश्रये ।
त्यक्त्वा संपत्कथं भोक्ष्य[7] इत्यस्मान् समुपाश्रय ॥१५॥
नो चेत्त्वं विप्रतीसारी भ्रष्टो मम स्मरिष्यसि ।
निद्रालुरिव तद्वाक्यं नाशृणवद्[8]ध्यानमीलितः ॥१६॥
तृष्णा तृष्णार्दितेवासौ प्रगल्भा ऽतृष्णमब्रवीत् ।
भ्रष्टाचारो ऽसि रे रे त्वं सर्वधर्मपरिच्युतः ॥१७॥
शक्तिं विना न सिध्यंति तपोयज्ञव्रतानि[9] च ।

[1] अप्येष P
[2] Ex conj अवसंस्तवषेकादि॰ C P
[3] Sic C P
[4] ॰ता: C
[5] ॰मासु C
[6] ॰धर्मशंसरैः P.
[7] ॰क्ष्ये C P.
[8] नाशृणवत् ध्यान॰ C
[9] ॰घ्रतानि C, ॰प्रतानि D P.

ब्रह्मादयः शक्तियुक्ता ऋषयो विलसंत्यपि[1] ॥१८॥
तृष्णाभिधां मां [2]विज्ञाय शक्तिं तृष्णादरो भव ।
नो चेद्बलात्त्वामालिंग्य[3] [4]प्राण उत्सृज्यते मया ॥१९॥
निष्कंपोऽसौ मृतप्रायो दध्यौ बुद्धाननुस्मरन् ।
अरतिश्चाराधयामास दुराराध्यं कुकर्मभिः ॥२०॥
[10]भगवन्नारतिनामाहं कार्यारतिविवर्धिनी ।
तस्मान्मां भिक्षुणीशक्तिं विधायारतिमावह ॥२१॥
आराधिते [5]भर्त्स्यमाने शापे चाशिषि तत्कृते ।
निर्वृतो निर्वृत इव ध्यानलीनो व्यतिष्ठत ॥२२॥
विषण्णास्यास्ततस्तिस्र एकांत[6] आश्रिता[7] मिथः ।
कृत्वा संभाषणां जग्मुस्तारुण्यरूपमुद्वहन्[8] ॥२३॥
कृतांजलिपुटास्तास्तं व्यजिज्ञपुस्तथागतं ।
प्रव्रज्यां देहि भगवन् भवच्छरणमागताः ॥२४॥
वार्तामाकर्ण्य भवतामायाताः कांचनात्पुरात्[9] ।
गार्हस्थ्यं धर्ममुत्सृज्य नमुचेरात्मजा वयं ॥२५॥
पंचशतानां भ्रातॄणां शिक्षासंवरणोत्सुकाः ।
यथा त्वमसि वैराग्यो[10] वयं च भर्तृवर्जिताः ॥२६॥
नैर्वाणिकाभिश्चर्याभिर्बोध्यमानो मुहुर्मुहुः ।
बुद्धानुस्मृतिमाधाय ध्यानलीनो न्यमीलत ॥२७॥

[1] ०त्यमी P  [2] Ex conj. विधाय (but cf 21)  [3] बलान्नामा० P
[4] प्राणम् C P.  [5] भ्रत्स्य० C P.  [6] एका तम् P.  [7] एकांतप्राग्गिता D.
[8] ०हृत् P  [9] पुरा C  [10] Sic C P

पुनः संमतमाधाय इंद्रजालिन्य एव ताः ।
[1]ज्यायांसं रूपमाधाय मोहयितुमुपाययुः ॥२८॥
[2]दासावतारे गहने भ्रमंत्यो वयमागताः ।
बुद्धावतारोऽस्ति भवान् वृद्धा बौद्धे नियोजय ॥२९॥
करुणायमाना ज्यायस्यो मृत्युभयविमोहिताः ।
नैर्वाणे स्थापनीयास्तत्पुनर्जन्मनिवर्तके[3] ॥३०॥
जालिनीनां वचस्तेन श्रुतं न च[4] प्रकोपितं ।
वृद्धावस्थाधिष्ठितास्ताः[5] किंतु ऋद्धिप्रकाशने[6] ॥३१॥
सुमेरुवन्निष्प्रकंपं ध्यानलीनं विलोक्य ताः ।
विमुखीभूय तारुण्यं धारितुं[7] नैव[8] शेकिरे ॥३२॥
पादौ नत्वाथ जीर्णांगाः पितरं तं व्यजिज्ञपुः ।
कामधात्वीश्वरस्ताताधिष्ठापय स्वरूपिकाः ॥३३॥
प्रियाः पुत्र्यो न शक्तोऽपि बुद्धाधिष्ठानमन्यथा ।
कर्तुं तत्तस्य शरणं गच्छतेति पिताब्रवीत् ॥३४॥
ततः सुचित्राः संबुद्धं प्रार्थयामासुरानताः ।
क्षमापराधमस्माकं यौवनोन्मत्तचेतसां ॥३५॥
मौनी क्षमाकरः शास्ता प्रत्यधिष्ठापयच्च ताः ।
नत्वा मुहुस्तं मुदिताः प्रशस्य[9] स्वालयं ययुः ॥३६॥
अथ मारः कामधात्वीश्वरोऽसौ निस्त्रपः पुनः ।

[1] Sic CP [2] Ex conj. दाशा° CP [3] °वर्तते P. [4] न नो P
[5] °ष्ठिता च C [6] प्रकाशते P [7] Sic CP. [8] न तु P
[9] प्रशंस्य CP

धृत्वा कौलेश्वरं रूपं [1]गगणस्थस्तमभ्यधात् ॥३७॥
भविष्यसीति बुद्धस्त्वं पूर्वं त्वां प्रणतोऽस्म्यहं[2] ।
अस्मदाशीर्भिरद्य त्वं[3] बुद्धस्तथागतोऽभवः ॥३८॥
यथागतोऽसि स्वाराज्यात्प्रत्यागत्य तथागतः ।
यथार्थनामत इति [4]राजतथागतो भव ॥३९॥
तद्राज्याश्रममाश्रित्य रत्नत्रयमनुस्मरन् ।
मातरं पितरं [5]पुष्य रमयित्वा यशोधरां[6] ॥४०॥
सहस्रपुत्रसंयुक्तो जगदुद्धरणक्षमः ।
यामाद्यभुवनाधीशः क्रमानुक्रमतो भवेः[7] ॥४१॥
बोधिसत्त्वाधीश्वरोऽपि भूत्वा निर्वृतिमाप्स्यसि ।
तत्पुत्रजनने धीमन् कपिलाश्रममुपाश्रय ॥४२॥
यथा भवान् धर्मराजः पुत्रा अपि तथागताः ।
प्रवृत्तिश्च निवृत्तिश्च त्वदधीना भवेज्जिन ॥४३॥
इत्युक्तवंतं तं प्राह सर्वज्ञः शृणु निस्त्रप ।
मारोऽसि त्वं नो कुलेशः शाक्यवंशप्रवर्धनः[8] ॥४४॥
त्वादृशाः कोटिशो नो मां विहेठयितुमशक्नुवन् ।
यास्यामि राज्यं क्रमशश्चारयिष्यामि निर्वृतौ ॥४५॥
पराजितोऽसि नमुचे स्वालयं प्रतिगच्छतात् ।
वाराणस्यामितो गंता धर्मचक्रप्रवर्तने ॥४६॥
आदिष्टमित्यसौ श्रुत्वा हा हतोऽस्मीति निःश्वसन् ।

[1] गगन° C P [2] ऽस्मि हि C [3] °द्यस्त्वं C P [4] राजा तथा° P.
[5] Ex conj. पोष्य C P [6] °रा: C P [7] भव: P [8] °क: C

विषादितो निःसहायो विहायसालयं ययौ ॥४७॥
ततोऽसौ मारजित्तस्माद्भद्रासनात्समुत्थितः ।
गंतुं वाराणसीं पुण्यामेकाकी प्रस्थितोऽचरत् ॥४८॥
छादितं गगणं[1] मेघैस्तदा दृष्ट्वा मुनीश्वरं ।
मुचिलिंदो नागराजः प्रार्थयामास भक्तितः ॥४९॥
सर्वज्ञो भगवंस्त्वं हि सप्ताहं दुर्दिनं भवेत् ।
वातवृष्टिश्चांधकारस्ततोऽस्मदाश्रमे वस ॥५०॥
महर्द्धिकोऽपि भगवान् संसारिकमनुस्मरन् ।
तद्रत्नासनमासीनो ध्यानलीनो व्यतिष्ठत ॥५१॥
सर्वरक्षाकरं बुद्धं वृष्टिवातांधकारतः ।
ररक्ष नागराजोऽसौ फणावेष्टितविग्रहं ॥५२॥
ततः सप्ताहनिर्याते नत्वा नागे विनिर्गते ।
अजपालवनोपांते नदीतीरे ययौ जिनः ॥५३॥
तत्रस्थं सुगतं रात्रौ देवो न्यग्रोधनामकः[2] ।
भासयन्समुपागत्य व्यजिज्ञपत्कृतांजलिः ॥५४॥
नृजन्मनि बुद्धनाम्ना न्यग्रोधो रोपितो मया ।
पापप्रमोचने योऽसौ बोधिद्रुरिव वर्धितः ॥५५॥
तत्पुण्येनाहमपि[3] स्वर्गस्थो वर्धितोऽस्म्यहं ।
मदनुग्रहतो ह्यत्र[4] सप्ताहं विजयस्व भोः[5] ॥५६॥
तथास्त्विति भक्तवांछाकल्पद्रुर्मुनिपुंगवः[6] ।

[1] **गगनं** C P [2] **०नामतः** C [3] Sic C P. [4] So D P, and C sec m, **०ग्रहतस्तत्र** C pr m [5] **भो** C P [6] **भक्तवत्सलः** D and C pr m., but corrected in C in margin

न्यग्रोधेऽस्थाद्ध्यानलीनः पूर्णेंदुरिव भासयन् ॥५७॥
तत्र सप्ताहमाश्रित्य ततोऽसौ क्षीरिकावने ।
तालमूलमुपासीनो ध्यानलीनो न्यमीलत[1] ॥५८॥
तत्र तत्र सप्तसप्तदिवारात्रं महामुनिः ।
ध्यात्वा ध्यात्वा निराहार उद्धरिष्णुः[2] समाचरत् ॥५९॥
अथोत्तरोत्कलदेशीयौ त्रपुषभल्लिकाभिधौ ।
सार्थवाहौ पंचधुरशतैर्युक्तौ महाधनौ ॥६०॥
प्रेतदोषाद्विनिर्मुक्तौ बुद्धाय ददतुर्मुदा ।
त्रिमधुपायसं तस्माल्लेभतुश्च[3] शुभाशिषः ॥६१॥
चैत्यार्थं नखकेशानि प्राप्य व्याकरणं ततः ।
शिलां च प्राप्स्यथ इति जग्मतुस्तौ ततोऽन्यतः ॥६२॥
[4]क्षीरिकावनवासिन्या देवतया समर्पितं ।
[5]प्रत्यगृह्णात्पिंडपात्रमाशीर्भिस्तां व्यवर्धयत् ॥६३॥
चतुर्महाराजदत्तं पात्रचतुष्टयं जिनः ।
एकमेवमधिष्ठाय पायसं बुभुजे मुदा ॥६४॥
अथैकस्मिन्दिने तत्र शक्रदत्तां हरीतकीं ।
भुक्त्वा वीजं समारोप्य [6]प्रारोहयत्तरुं जिनः ॥६५॥
देवराजो देवलोकाच्छ्रावयामास तां मुदा[7] ।
प्रदक्षिणीकृत्य [8]सिषिचुर्देवा मर्त्याश्च दानवाः ॥६६॥

[1] व्यतिष्ठत P [2] उद्धरित्नुः P. [3] Ex conj तस्माल्लभिरे च C pr m, corrected to तस्माल्लेभतुश्च; तस्माल्लभतुश्च P, D has some words wanting. [4] क्षीरिका° CP [5] प्रत्यगृह्णात् C [6] बुद्धः प्रारोहयत्तरुं P [7] पुनः P [8] सिंषिचुः CP

श्रुत्वा हारीतकीं वार्तां स्मृत्वा पूर्वानुभौतिकां[1] ।
[2]गोपूर्विका देवकन्या भद्रिकाख्याययौ दिवः ॥६७॥
शाखावलंबितं पांसुकूलं[3] वस्त्रं वहञ्जिनं ।
विज्ञापयामास देवकन्या सा ससखी स्मिता ॥६८॥
विज्ञापयामि किं बुद्ध पांसुकूलं[3] गृहाण मे ।
यस्यानुभावान्नाकेऽहं भद्रिका नाम कन्यका ॥६९॥
एतद्धर्मविपाकेन बोधिसत्त्वो भविष्यसि ।
इत्याशीर्वचसा शास्ता पांसुकूलमुपाददे[3] ॥७०॥
जीर्णं दृष्ट्वा पांसुकूलं[3] ही हीति विस्मयान्विताः ।
खस्था देवाश्चिक्षिपुस्तं दिव्यपट्टांबराणि ह[4] ॥७१॥
श्रमणार्हाणि नेमानि इत्येकमपि नाग्रहीत् ।
ऐश्वर्यार्हाणि चैतानि गार्हस्थ्यानीति [5]निःस्पृहः ॥७२॥
मलप्रक्षालनार्थं च चकांक्ष प्रस्तरं जलं ।
चखान तत्क्षणे शक्रो जलप्रायां महानदीं[6] ॥७३॥
चतुर्भिश्च महाराजैर्नीयते तं[7] चतुःशिलाः ।
एकस्यां स्वयमासीन एकस्यां क्षालनं व्यधात्[8] ॥७४॥
एकस्यां शोषणं तस्य एकां खे चाक्षिपच्छिलां ।
शिलोज्ज्वलपुरं प्राप्ता लोकान् व्यस्मापयच्छिला ॥७५॥
बहुशो मान्य त्रपुषभल्लिकौ चैत्यमुत्तमं ।

[1] ०भूतिकां P [2] Ex conj गवापूर्विका C, गौपूर्विका P (Cf Mahâbh v 7553) [3] पांशु० C P [4] Ex conj हो C P [5] निस्पृहः C P [6] नदीपरां C [7] न P. [8] क्षतं D and so C pr m

यथाविधि प्रतिष्ठाप्य [1]शिलागर्भमिति व्यधात् ॥७६॥
शिलाचयं चैत्यभूतं सिषेवे[2] तत्तपोधनाः ।
पुण्या नदीति विख्याता ववाह सरिदुत्तमा[3] ॥७७॥
पुण्यां स्नात्वा समभ्यर्च्य शिलाचैत्यं भजंति ये ।
बोधिसत्त्वा महात्मानो निर्वृतिं प्राप्नुवंति ते ॥७८॥
अथ तालायनासीनो भगवान्समचिंतयत् ।
मया संबुध्यते ज्ञानं गंभीरं दुरनुबोधकं ॥७९॥
इमे कषायिता[4] लोका न जानंतीममुत्तमं ।
अप्रबुद्धाश्च निंदंति मां च ज्ञानं प्रगल्भिताः[5] ॥८०॥
धर्मं किमुपदेक्ष्यामि विद्यात एव जायते ।
विविक्त एवमाश्रित्य जगदुद्धर्तुमुत्सहे ॥८१॥
पूर्वप्रतिश्रुतं स्मृत्वा पुनरेवमचिंतयत् ।
व्याख्यास्यामीति निश्चित्य जगदुद्धरणार्थतः ॥८२॥
ऊर्णाकोशात्प्रभां रात्रौ विनिष्काश्य व्यराजत ।
जगत्संचोदयन् बुद्धो ध्यानलीनो मुनीश्वरः ॥८३॥
ब्रह्मादयः प्रभातायां भुवनाधिपतयोऽपरे ।
सुगतं प्रार्थयामासुर्धर्मचक्रप्रवर्तने ॥८४॥
तथास्त्विति जिने [6]तूष्णीभूते ते स्वालयं ययुः ।
शाक्यसिंहोऽपि तत्रैव ध्यानलीनो [7]वसन् बभौ ॥८५॥
देवता धर्मरुच्याद्याश्चतस्रस्तं व्यजिज्ञपुः ।

[1] शिलागर्भेति तद्व्यधात् C [2] सिषेविरे तपो ?नाः ? (शिषिवे C) [3] ग्महती वरा C pr m [4] ०का P [5] प्रगंभिताः P [6] Sic C P [7] वभौ वसन् C

क्व भगवान् धर्मचक्रं प्रवर्तयेज्जगद्गुरो ॥८६॥
मृगदावे धर्मचक्रं वाराणस्यां प्रवर्तये ।
चतुर्थासन आसीनो देवता जगदुद्वरे ॥८७॥
व्यचिंतयच्च तत्रासौ भगवाञ्छाक्यपुंगवः ।
कस्मै प्रवर्तये[1] धर्मचक्रं प्रथमतोऽप्यहं ॥८८॥
विचार्य [2]रुद्रकाराडौ निर्वातौ श्रीघनोऽपरान् ।
पंचकान् भद्रवर्गीयान् काशीस्थानस्मरत्पुनः ॥८९॥
अथ प्रतस्थे बुद्धोऽसौ काशीं गंतुं प्रमोदितः[3] ।
विविधां मागधीं चर्यां प्रकाशयन्महर्धितां ॥९०॥
आजीवकं संप्रसाद्य मार्गे धर्मप्रभावतां ।
ययौ प्रकाश्योत्तरतो गयायाः श्रीघनो दिशं ॥९१॥
सुदर्शनाख्यनागेशभवने निशि योगतः ।
प्रातः पंचामृताहारो वर्धयन्नाशिषा ययौ ॥९२॥
वणारानिकटे चैकतरुच्छायामुपाश्रितः ।
ब्रह्मणि स्थापयामास नंदिसंज्ञं[4] द्विजाधमं ॥९३॥
वणारायां गृहपतेर्गेहे रात्रौ निवासितः ।
प्रातः पायसमाहार्य तद्वाराणसीस्ततोऽगमत् ॥९४॥
[5]वुंदद्वीराभिधे ग्रामे वुंदाख्ययक्षसद्मनि ।
वसन् प्रातरशन्[6] क्षीरं ददन्नाशिषमाययौ ॥९५॥

[1] प्रवर्तयेद्धर्म° C P [2] Sic C P (cf xii 86) [3] Sic P, and C by marg. correction, but D and C pr m have मुदा चरन्. [4] Sic P, and C by marg. correction, D and C pr m नंदि नाम [5] Sic C P? [6] अश्नन् ?

रोहितवस्तुकं नामोद्यानं तत्र कमंडलुः ।
नागाधिपः सपौरेयोऽभ्यर्चयामास तं तथा ॥९६॥
तत्र तत्र समुद्धृत्य लोकानसौ दयामयः[1] ।
गच्छन् गंधपुरं गंधयक्षेणाभ्यर्चितो[2] मुनिः ॥९७॥
सारथिं पुरमासाद्य सारथ्यं चक्रिरे प्रजाः ।
ततो गंगां समासाद्य ततुं नाविकमब्रवीत् ॥९८॥
साधो तारय मां गंगां संतु ते सप्त वृद्धयः ।
तरपण्यं विना कंचित्तारयामि न तामिति ॥९९॥
निःस्वोऽहं किमु दास्यामीत्युक्त्वागात्खात्खगेंद्रवत् ।
[3]बिंबिसारस्तदारभ्याजहात्पण्यं विरागिणां ॥१००॥
वाराणसीं प्रविश्याथ भासा संभासयन् जिनः ।
चकार काशीदेशीयान् कौतुकाक्रांतचेतसः ॥१०१॥
शंखमेधीय उद्याने ध्यानलीनो निशेशवत् ।
आह्लादयन् विस्मितांश्च क्षपां निनाय धर्मराट् ॥१०२॥
यामद्वये परेद्युश्च याचित्वा पिंडमाहरन् ।
हरिरिवाद्वितीयोऽसौ मृगदावमुपासरत् ॥१०३॥
पंचका भद्रवर्गीयास्तं समीक्ष्य मिथोऽब्रुवन् ।
गौतमोऽयमिहायातः श्रमणो भ्रष्टसंवरः ॥१०४॥
बाहुलिकोऽविशुद्धात्मा शैथिल्योऽनिष्ठितेंद्रियः ।
सुखल्लिकानुयोगाभिरक्तो विहरतेऽधुना ॥१०५॥
तदस्य कौशलप्रश्नं प्रत्युन्यानं च भाषणं ।

[1] दयाकुलः C [2] अभ्यर्चितो P [3] बिम्बि॰ C P

आमंत्रणं चासनं च कर्तव्यं नो प्रवेशनं ॥१०६॥
मत्वा तेषां क्रियाबंधं स्मिताननः प्रभासयन् ।
[1] खिक्खिरीपात्रधृग्बुद्धः क्रमान्निकटमभ्यगात् ॥१०७॥
विस्मरंतः क्रियाबंधं तत्प्रभावाच्च पंच ते ।
अग्निदग्धाः पंजरस्था उत्तस्थुरिव खेचराः ॥१०८॥
गृह्य पात्रं खिक्खिरीं च पाद्यार्घ्याचमनं[2] ददुः ।
प्रणम्य च व्यजिज्ञपुरायुष्मन् कौशलं तव[3] ॥१०९॥
कुशलं सर्वतोऽस्माकं प्राप्ता बोधिः सुदुर्लभा ।
इत्युक्त्वा भगवानाह [4]पंचकान् भद्रवर्गिकान् ॥११०॥
किंतु मामायुष्मानिति मा ब्रूत विद्धि मां जिनं ।
युष्मभ्यं प्रथमं धर्मचक्रं दातुमिहासरं
प्रव्रज्यामनुगृह्लध्वं[5] निर्वाणपदमाप्स्यथ ॥१११॥
ततस्ते पंचकाः शुद्धचित्तास्ते याचिरे व्रतं ।
तेषां शिरः स्पृशन् बुद्धः प्रव्रज्यायां समग्रहीत् ॥११२॥
विज्ञप्ते भिक्षुभिरसौ पुष्करिण्यां मुनीश्वरः ।
स्नात्वा सामृतमाहार्यं धर्मक्षेत्रमचिंतयत् ॥११३॥
मृगदावं जिनक्षेत्रमवेति समनुस्मरन् ।
सह तैर्मुदितो गच्छन् भद्रासनान्यदर्शयत् ॥११४॥
त्रीण्यासनानि नत्वासौ चतुर्थासनमैच्छत ।

[1] Sic C P Cf. Divyâvadâna, p 570, l 7, var lect [2] पाद्यार्घाच° C P here, but P has *arghya* in l 57 [3] This line is written again in the margin of C, व्यजिज्ञपुः प्रणत्वा चेत्यायुष्मन् कौशलं तव ।, but D agrees with the text. [4] पुनस्तान् पंच भद्रिकान् P [5] Sic C P

पृष्टे च भद्रवर्गीयैरकथयद्विनायकः ॥११५॥
भद्रकाल्पिकबुद्धानामासनानां चतुष्टयं ।
त्रयो.बुद्धा गता ह्यस्मिंश्चतुर्थो दशबलोऽस्मि भो ॥११६॥
इत्युक्त्वा श्रीघनस्तान् मणिखचितशिलादूष्यपट्टांबराढ्यं
नत्वा धर्मासनं तत्कनकगिरिनिभं संधृतं राजराजैः ।
आषाढस्याद्यपक्षे सुरगुरुदिवसे विष्णुतिथ्यां शुभे च
योगे भे चानुराधे विजयसमभिधेऽस्यान्मुहूर्ते त्रियामे ॥११७॥
वर्गीयाः पंचकास्ते प्रमुदितमनसस्तस्थिरेऽग्रे कृतार्चाः
ध्यानं शौद्धोदनेयः सकलभुवनसंचोदनाख्यं व्यधात्तत् ।
ब्रह्माद्याश्चागतास्तेऽनुचरपरिवृताश्चोदिताः स्वस्वलोकात्
मैत्रीयस्तौषितेयैः [1]सह विबुधगणैरागमद्धर्मचक्रे ॥११८॥
एवं दिग्भ्यो दशभ्यो जिनजसुरगणे संनिपातेऽभ्यगाच्च
श्रीमान् [2]धर्मादिचक्राभिधजिनजवरो धर्मचक्रं दधानः ।
प्राचुर्यं स्वर्णरत्नैः प्रणमितशिरसा तत्पुरोधाय बुद्धं
संपूज्य प्रार्थयद्भो कुरु सुगतकृतं धर्मचक्रं मुनींद्र ॥११९॥

इति श्रीबुद्धचरिते महाकाव्येऽश्वघोषकृते धर्मचक्रप्रवर्तना-
ध्येषणं[3] नाम पंचदशः सर्गः ॥१५॥

[1] So P, and this is the marginal reading of C, but with प्रागमद्, C pr. m and D सहितपरिचरैः प्रा°  [2] धर्माद्य° P.  [3] °नं C.

## BOOK XVI.

मैत्रीयवर्गीयमुखां सर्वावतीं च पार्षदं ।
स सर्वज्ञः शाक्यसिंहो धर्मचक्रमवर्तयत् ॥१॥
शृणु मैत्रीयवर्गीय पार्षद्गणसमन्वित[1] ।
यथातीतैस्तैर्मुनीन्द्रैर्व्याख्यातं तन्मयाधुना ॥२॥
द्वाविमौ भिक्षवोऽन्तौ हि प्रव्रजितस्य संवरे ।
यः कामसुखसंरक्तो ग्राम्यः [2]पार्थग्जनोऽपि च ॥३॥
यश्चात्मक्लेशसंतापदुःखातिवेदनाहतः ।
एतौ प्रव्रजितस्यान्तौ ह्यनार्यानर्थसंरतौ ॥४॥
एतौ न ब्रह्मचर्यायां न विरागे न संवरे ।
न निर्वेदे निरोधे च विमुक्तिसाधनेऽपि न ॥५॥
नाभिज्ञासु न बोधौ च न निर्वाणेऽभिवर्तिनौ ।
यः कायक्लमदुःखानुयोगानर्थोपसंहितः ॥६॥
दृष्टधर्मे सुखे दुःखे आयत्यां निरतोत्सवः ।
मध्यां प्रतिपदं ह्येतामनुगम्य जगद्धिते ॥७॥
तथागतो जगच्छास्ता सद्धर्मं समुपादिशेत् ।
यदार्यसत्यमारभ्य सद्धर्मसंप्रकाशनं ॥८॥

[1] Ex conj °तः C P [2] प्रार्थग्जनो C

आर्याष्टांगिकमार्गं च संबुद्धः समुपादिशेत् ।
तथाहमपि संबुद्धस्तथागतोऽधुना भवे ॥९॥
तदार्यसत्यमारभ्य देशेयं धर्ममुत्तमं ।
आर्याष्टांगिकमार्गं च संबुद्धज्ञानसाधनं ॥१०॥
उपदिश्य जगल्लोकं दर्शयेयं सुनिर्वृतिं[1] ।
तदार्यसत्यमादौ तच्छ्रोतव्यं ज्ञेयमात्मना ॥११॥
तत्परिज्ञाय साक्षाच्च कर्तव्यं ब्रह्मचारिभिः ।
यन्मयात्र स्वयं बुद्धं सर्वबुद्धप्रसादतः ॥१२॥
ज्ञात्वार्याष्टांगमार्गं च धृत्वा साक्षात्कृतं मुदा ।
तथाहं प्रथमं वोऽत्र विमुक्तिपदसाधनं ॥१३॥
आर्यसत्यं समारभ्य समुपाख्ये सुसंवरं ।
तदत्र सर्वधर्माणामार्यसत्यमिदं वरं ॥१४॥
आर्याष्टांगिक[2]मार्गं च धृत्वा चरध्वमाभवं ।
एतद्धि परमं धर्ममार्यसत्यं सुमुक्तये ॥१५॥
मत्वार्याष्टांगमार्गं च धृत्वा चरत संवरं ।
एतदन्येऽपरिज्ञाय [3]प्रवादिनोऽभिमानिकाः ॥१६॥
संसारसाधनं धर्मं प्रवदंति निजेच्छया ।
केचिदात्मैव संपाल्यस्तत्पुण्यं मुक्तिकारणं ॥१७॥
केचित्स्वाभाविकं सर्वं केचित्पूर्वकृतं फलं ।
केचिच्चापीश्वराधीनमित्येवं प्रवदंत्यपि ॥१८॥

[1] ०तं C. [2] आर्याष्टागमार्ग C [3] प्रमादिनो P

आत्मनश्चेत्सुखादुःखात्पुण्यं पापं प्रजायते ।
कथं न भद्रता नित्यं धर्माभावेऽपि देहिनां ॥१९॥
रूपसौभाग्यभाग्यादि[1]भेदः कथमिहेष्यते ।
यदि पूर्वकृतं नास्ति कथमत्र शुभाशुभे ॥२०॥
कर्मणां कर्म हेतुश्चेत्कोऽत्र सारं प्रकल्पयेत् ।
स्वाभाविकं जगत्स्याच्चेत्कः कर्मस्वकतां वदेत् ॥२१॥
सुखं हेतुसुखं स्याच्चेद्दुःखं दुःखस्य हेतु हि ।
तपसा दुष्करेणैव कथं मुक्तिर्भवेद्भवात् ॥२२॥
ईश्वरः कारणं केचिदबुधाः संप्रचक्षते ।
कथं न समता लोके समवर्तीश्वरो हि सः ॥२३॥
इत्येवमबुधाः केचिदस्ति नास्ति प्रवादिनः ।
कुदृष्टिकर्मतो हीना जायंते नरकेष्विह ॥२४॥
सुदृष्टिकर्मतो भद्रा आर्यज्ञानप्रवेदिनः ।
स्वर्गलोके गताः संतः कायवाक्चित्तसंयमात् ॥२५॥
सर्वो भवरतो लोकः क्लेशसंघैर्निहन्यते ।
जराव्याधिविपद्घातो[2] मृतः पुनः प्रजायते ॥२६॥
संत्यत्र बहवः प्राज्ञाः संवृत्तिधर्मवादिनः ।
एकोऽपि विद्यते नात्र सुनिर्वृत्तिविधानवित् ॥२७॥
पंचस्कंधमयं देहं [3]पंचभूतसमुद्भवं ।
शून्यमनात्मकं सर्वं प्रतीत्योत्पादसंभवं ॥२८॥

[1] ०भोग्यादि P  [2] Ex conj विपघ्रातो C P Should we read विपद्ग्रस्तो ?
[3] परभूत० P

तत्प्रतीत्यसमुत्पादं संवृत्तिधर्मसाधनं ।
[1]तत्क्रमसंनिरोधं हि निर्वृत्तिपदसाधनं ॥२९॥
इति विज्ञाय यः कर्तुं जगद्धितं समिच्छति ।
स प्रतीत्यसमुत्पादं धृत्वा संबोधिमानसः ॥३०॥
बोधिचर्याव्रतं धृत्वा चतुर्ब्रह्मविहारभृत् ।
सर्वसत्त्वहितं कुर्वन्[2] संचरतां सदा भवे ॥३१॥
ततोऽर्हन् सकलान् दुष्टाञ्जित्वा मारगणानपि ।
त्रिविधां बोधिमासाद्य संयास्यति[3] सुनिर्वृतिं ॥३२॥
अथ योऽत्र विरक्तात्मा संसारगतिनिःस्पृहः ।
स प्रतीत्यसमुत्पादं क्रमेण संनिरोधयेत् ॥३३॥
संनिरुद्धे क्रमेणास्मिन् प्रतीत्योत्पादसंभवे ।
निरंजनो निरालंबः सुनिर्वृतिं समाप्नुयात् ॥३४॥
शृणुत श्रेयसे सर्वे यूयं निर्मलमानसाः ।
तत्प्रतीत्यसमुत्पादं वक्ष्यामि वो यथाक्रमं ॥३५॥
अविद्यावासनैवेयं दुःखस्कंधस्य भूयसः ।
संसारविषवृक्षस्य मूलबंधविधायिनी ॥३६॥
तत्प्रत्ययास्तु संस्काराः कायवाङ्मानसात्मकाः ।
संस्कारोत्थं च विज्ञानं मनःषष्ठेंद्रियात्मकं ॥३७॥
तत्प्रत्ययं नामरूपं संज्ञासंदर्शनाभिधं ।
मनःषष्ठेंद्रियस्थानं षडायतनमप्यतः ॥३८॥

[1] तत्क्रमात्संनिरोधं P [2] कुर्वत् C P [3] °स्यन्ति C P

षडायतनसंश्लेषः स्पर्श इत्यभिधीयते ।
षट्स्पर्शानुभवो यश्च वेदना सा प्रकीर्तिता ॥३९॥
तया विषयसंक्लेश[1]रागस्तृष्णा[2] प्रजायते ।
कामादिषु तदुद्भूतमुपादानं प्रवर्तते ॥४०॥
उपादानोद्भवः कामरूपारूप[3]मयो भवः ।
नानायोनिपरावृत्त्या जातिर्भवसमुद्भवा ॥४१॥
जरामरणशोकादिसंततिर्जातिसंश्रया ।
अविद्यादिनिरोधेन तेषां व्युपरतिक्रमः ॥४२॥
प्रतीत्योत्पादोऽयं बहुगतिरविद्याकृतपदः[4]
स चिंत्यो युष्माभिर्विजन--- विश्रामशमिभिः[5] ।
परिज्ञातः सम्यग्व्रजति किल कालेन तनुतां
तनुत्वं संप्राप्तः सुखतरनिवृत्तिश्च भवति ॥४३॥
इति विज्ञाय युष्माभिर्भवबंधविमुक्तये ।
अविद्या दुःखमूलं संछेदितव्यं प्रयत्नतः ॥४४॥
ततो यूयं विनिर्मुक्तभवचाराभिबंधनाः ।
अर्हंतो निर्मलात्मानो निर्वृत्तिं समवाप्स्यथ[6] ॥४५॥
इत्यादिष्टं मुनींद्रेण श्रुत्वा सर्वेऽपि भिक्षवः ।
प्रवृत्तिं च निवृत्तिं च संसारस्याभिमेनिरे ॥४६॥
तन्निशम्य तदा तेषां पंचानां ब्रह्मचारिणां ।

[1] Should we read संश्लेष ?
[2] °रागस्तृष्णा C (?)
[3] °रूपारूप्यमयो C.
[4] Sic C P.
[5] The line wants two syllables, should we read विजनवन° ?
[6] °प्स्यथः C P.

संबोधिज्ञानसंप्राप्तै प्रज्ञाचक्षुर्विशोधितं ॥४७॥
षष्टीनां देवकोटीनां धर्मचक्षुर्विशोधितं ।
अशीतिब्रह्मकोटीनां ज्ञानचक्षुर्विशोधितं ॥४८॥
अशीतिनृसहस्राणां धर्मचक्षुर्विशोधितं ।
सर्वेषामपि सत्त्वानां धर्मोत्साहं विरोचितं ॥४९॥
अपाया अपि सर्वत्र सर्वेऽपि[1] प्रशमं गताः ।
सद्धर्मसाधनोत्साहं प्रावर्तत समंततः ॥५०॥
अंतरीक्षेऽपि सर्वत्र त्रिदशाः साप्सरोगणाः ।
एवं भद्र महोत्साह निर्घोषं संव्यसारयन्[2] ॥५१॥
मैत्रेयोऽथ महाभिक्षो भगवंतं व्यजिज्ञपत् ।
कियद्रूपं भगवता धर्मचक्रं प्रवर्तितं[3] ॥५२॥
इति संप्रार्थितं तेन [4]मैत्रेयेण महात्मना ।
श्रुत्वा स भगवान् पश्यन्मैत्रेयमेवमादिशत्[5] ॥५३॥
गंभीरं दुर्दृशं [6]सूक्ष्मं धर्मचक्रं प्रवर्तितं ।
यत्र सर्वे न गाहंते तीर्थिकाः परिवादिकाः ॥५४॥
निःप्रपंचमनुत्पादमसंभवमनालयं ।
विविक्तं प्रकृतिशून्यं धर्मचक्रं प्रवर्तितं[7] ॥५५॥
नानाव्यूहमनिर्व्यूहम[8]निमित्तमलक्षणं ।
समताधर्मनिर्देशं[9] चक्रं बुद्धेन वर्णितं ॥५६॥

[1] ऽभि॰ C [2] ॰यत् C P [3] After this line P inserts *yatra sarve* &c, 54 *b*
[4] मैत्रीयेन C, मैत्रेयेन P. [5] मैत्रीयम् C. [6] शूक्ष्मं C P [7] समुन्नमं C
[8] Ex conj अनिर्यूह C P [9] Ex conj ॰निर्देशचक्रं C P

मायामरीचिस्वप्नाभं जलेंदुप्रतिनादवत् ।
प्रतीत्यधर्ममुत्तानमनुच्छेदमशाश्वतं ॥५७॥
सर्वदृष्टिसमुच्छिन्नं धर्मचक्रमिति स्मृतं ।
आकाशेन सदा तुल्यं निर्विकल्पं प्रभास्वरं ॥५८॥
अनंतमध्यनिर्देशं धर्मचक्रमिहोच्यते ।
अस्तिनास्तिविनिर्मुक्तमात्मनैरात्म्यवर्जितं ॥५९॥
प्रकृत्या जातनिर्देशं धर्मचक्रमिदं स्मृतं ।
भूतकोटिमकोटिं च तथतातत्स्वभावकं ॥६०॥
अद्वयधर्मनिर्देशं धर्मचक्रमिति स्मृतं ।
चक्षुःस्वभावतः शून्यं श्रोत्रं घ्राणं तथैव च ॥६१॥
जिह्वाका[1]यमनःशून्यमनात्मकं निरीहकं ।
इदं तदीदृशं धर्मचक्रं मया प्रवर्तितं[2] ॥६२॥
बोधयत्यबु[3]धान्सर्वांस्तेन बुद्धो निरुच्यते ।
स्वयं मयानुबुद्धोऽयं स्वभावधर्मलक्षणः ॥६३॥
ऋते परोपदेशेन स्वयंभूस्तेन कथ्यते ।
सर्वधर्मवशिप्राप्तो धर्मस्वामीति संस्मृतः ॥६४॥
नयानयज्ञो धर्मेषु नायकस्तेन कथ्यते[4] ।
यथा भवंति वैनेया [5]विनयत्यमिताञ्जनान् ॥६५॥
विनयपारमिताप्राप्तस्तेन प्रोक्तो विनायकः ।
सत्त्वानां नष्टमार्गाणां सन्मार्गोत्तमदेशनात् ॥६६॥

[1] °कायं CP. [2] प्रदर्शितं P. [3] अबुद्धान् P [4] गद्यते D; ग्रह्यते (?) C [5] विनयंति CP

सन्नयपारमिताप्राप्तः सर्वधर्मविनायकः ।
संग्रहवस्तुज्ञानेन संगृह्य सर्वप्राणिनः ॥६७॥
संसाराटविनिस्तीर्णः सार्थवाह इति स्मृतः ।
वशवर्ती सर्वधर्मे तेन धर्मेश्वरो जिनः ॥६८॥
सर्वधर्माधिराजेंद्रो धर्मचक्रप्रवर्तनात् ।
धर्मदानपतिः शास्ता धर्मस्वामी जगत्पतिः ॥६९॥
यष्टयज्ञः सुसिद्धार्थः पूर्णाशः सिद्धमंगलः ।
आश्वासकः प्रेमदर्शी वीरः शूरो रणंजयः[1] ॥७०॥
उत्तीर्णसर्वसंग्रामो मुक्तः सर्वविमोचकः ।
जगदालोकभूतः सत्प्रज्ञाज्ञानप्रभंकरः[2] ॥७१॥
अज्ञानध्वांतसंहर्ता महदुल्काप्रभंकरः[2] ।
महावैद्यो महाज्ञानी सर्वक्लेशचिकित्सकः ॥७२॥
सर्वक्लेशाभिविद्धानां क्लेशशल्यसमुद्धरः ।
सर्वलक्षणसंपन्नः सर्वव्यंजनमंडितः ॥७३॥
समंतभद्ररूपांगः [3]शुद्धाचारविशुद्धधीः ।
दशबली महाधीरो वैशारद्यविशारदः ॥७४॥
सर्वावेणिकसंपन्नो महायानसमाश्रितः ।
सर्वधर्माधिपो नाथः सर्वलोकाधिपः प्रभुः ॥७५॥
सर्वविद्याधिपो विज्ञः सर्ववादिमदांतकः ।
सर्वज्ञोऽर्हन् महाभिज्ञो महाबुद्धो मुनीश्वरः ॥७६॥
दुष्टमारमदोत्साहनिहंता विजयी कृती ।

[1] Ex conj रणंजहः C P [2] Sic C P प्रभाकरः ? [3] श्रद्धा° P

संबुद्धः सुगतः प्राज्ञः सर्वसत्त्वहितार्थभृत् ॥७७॥
कृतज्ञोऽद्वयवादी सद्भद्रश्रीसद्गुणाकरः ।
सर्वदुर्वृत्तिसंहर्ता [1]सर्वसद्वृत्तिचारकः ॥७८॥
जगन्नाथो जगद्भर्ता जगत्स्वामी जगत्प्रभुः ।
जगद्गुरुर्जगच्छास्ता जगद्धर्मगुणार्थभृत् ॥७९॥
सर्वदुःखाग्निसंतापशमपूर्णसुधाकरः ।
सर्वदुःखमहांभोधि[2]शोषणतीक्ष्णभानुभृत् ॥८०॥
सर्वधर्मार्थसंभर्ता भद्रश्रीसद्गुणाश्रयः ।
बोधिमार्गाभिदेष्टा सन्निवृत्तिमार्गदेशकः ॥८१॥
निरंजनो निरासंगो निर्विकल्पस्तथागतः ।
एष संक्षेपनिर्देशो धर्मचक्रप्रवर्तने ॥८२॥
तथागतगुणोद्भावः परीत्तो वर्ण्यते मया ।
बुद्धज्ञानमनंतं हि यथाकाशमनंतकं ॥८३॥
प्रभाषन् क्षेपयेत्कल्पं न तु बुद्धगुणक्षयं ।
एवं मयात्र संबुद्धसद्गुणोऽभ्यनुवर्ण्यते ॥८४॥
श्रुत्वानुमोदनां कृत्वा संचरध्वं सदा शुभे ।
इदं मार्षा महायानं संबुद्धधर्मसाधनं
सर्वसत्त्वहिताधानं सर्वबुद्धैः प्रचारितं ॥८५॥
यथेदं धर्मपर्यायं विस्तारितं सदा भवेत ।
तथा यूयं सदाभाष्य[3] संचारयितुमर्हथ ॥८६॥
योऽपि मार्षा इमं धर्मपर्यायं श्रीशुभाकरं ।

[1] Ex conj सर्वसंवृत्ति° C P [2] °मदांभोधि° P [3] समाभाष्य P.

श्रुत्वा दृष्ट्वानुमोदित्वा सांजलिः प्रणमिष्यति ॥८७॥
स समुत्कृष्टरूपांगं लप्स्यते बलमुत्तमं ।
सज्जनपरिवारं च प्रतिभानं समुत्तमं ॥८८॥
अविघ्नसुखनैष्कर्म्यं[1] समुत्कृष्टवरेंद्रियं ।
शुद्धप्रज्ञावभासं च भद्रसमाधिसंपदं ॥८९॥
इमानष्टौ समुत्कृष्टान् सद्धर्मान्स लभेद्ध्रुवं ।
श्रुत्वेमं यः प्रसन्नात्मा दृष्ट्वा च सांजलिर्भवेत् ॥९०॥
यश्चाप्येतन्महाधर्मभाणकस्य महामतेः ।
धर्मासनं सभामध्ये प्रज्ञपयेत्प्रमोदितः ॥९१॥
स हि साधुर्लभेन्नूनं महाश्रेष्ठजनासनं ।
गृहपत्यासनं चापि चक्रवर्तिनृपासनं ॥९२॥
लोकपालासनं चापि शक्रासनमपि ध्रुवं ।
वशवर्त्यासनं चापि ब्रह्मासनं समुत्तमं ॥९३॥
बोधिमंडगतस्यापि बोधिसत्त्वस्य संमते[2] ।
बोधिप्राप्तस्य सद्धर्मदेशकस्य सभासनं ॥९४॥
इमान्यष्टौ स शुद्धात्मा प्रालभेदासनान्यपि ।
यो धर्मभाषमाणस्य [3]प्रज्ञपयेन्मुदासनं ॥९५॥
य इमं धर्मपर्यायं भाषमाणाय साधवे ।
साधुकारं समालोक्य संप्रदद्यात्प्रसादितः ॥९६॥
स सत्यशुद्धवादी स्यादादेयवचनोऽपि च ।

C P  [2] सन्मते C P  [3] प्रज्ञापये° P

मनोज्ञग्राह्यवाक्योऽपि श्लक्ष्णमधुरनिस्वनः ॥९७॥
कलविंकस्वरश्चापि गंभीरमधुरस्वरः ।
शुचिब्रह्मस्वरश्चापि सिंहघोषमहास्वरः ॥९८॥
संबुद्धसत्यवाद्येतदष्टौ वाचो [1]गुणांल्लभेत् ।
सद्धर्मभाषमाणस्य साधुकारं ददाति यः ॥९९॥
यश्चेमं[2] धर्मपर्यायं लिखित्वा पुस्तके गृहे ।
प्रतिष्ठाप्य सदाभ्यर्च्य सत्कारैर्मानयन् भजेत् ॥१००॥
अस्य च वर्णमुच्चार्य प्रचारयेत्समंततः ।
लप्स्यते स महासाधुः स्मृतिनिधानमुत्तमं ॥१०१॥
महाप्रतिनिधानं[3] च गतिनिधानमुत्तमं ।
सुधारणीनिधानं च निधानं प्रतिभानकं[4] ॥१०२॥
बोधिचित्तनिधानं च धर्मनिधानमुत्तमं ।
प्रतिपत्तिनिधानं च सद्धर्मगुणसाधनं ॥१०३॥
इमान्यष्टौ निधानानि लप्स्यते स महामतिः ।
लिखित्वेदं मुदा यश्च प्रतिष्ठाप्य सदा भजेत् ॥१०४॥
यश्चेमं[5] धर्मपर्यायं स्वयं धृत्वा प्रवर्तयेत् ।
स पुमान् दानसंभारं संपूरयेज्जगद्धिते ॥१०५॥
ततश्च शीलसंभारं श्रुतसंभारमुत्तमं ।
ततः शमथसंभारं तथा विपश्यनाभिधं ॥१०६॥
सद्धर्मपुण्यसंभारं ज्ञानसंभारमुत्तमं ।

[1] गुणाल्लभेत् C, P not clear [2] यश्चेदं C [3] Sic C P, should we read महामति°? or महाप्रीति°? [4] °भाणकं P. [5] यश्चेदं C P.

महाकारुण्यसंभारं संबुद्धगुणसाधनं ॥१०७॥
स संभारानिमानष्टौ लप्स्यते संप्रमोदितः ।
य इमं धर्मपर्यायं स्वयं धृत्वा प्रचारयेत् ॥१०८॥
यश्चेमं धर्मपर्यायं परेभ्य उपदेक्ष्यते ।
स महत्पुण्यशुद्धात्मा भवेच्छ्रीमान्महर्द्धिकः ॥१०९॥
चक्रवर्ती नृपेंद्रः स्याल्लोकपालाधिपोऽपि च ।
शक्रो देवाधिपश्चापि यामलोकाधिपोऽपि च ॥११०॥
तुषिताधिपतिश्चापि सुनिर्मिताधिपोऽपि च ।
वशवर्तीश्वरश्चापि ब्रह्मलोकाधिपोऽपि च ॥१११॥
महाब्रह्मा मुनींद्रोऽपि प्रांते बुद्धो भवेदपि ।
इमान्यष्टौ सुपुण्यानि लप्स्यते स विशुद्धधीः ॥११२॥
यश्चेमं धर्मपर्यायं भाष्यमाणं समाहितः ।
श्रोष्यति सुप्रसन्नात्मा श्रद्धाभक्तिसमन्वितः ॥११३॥
स सुनिर्मलचित्तः स्यान्महामैत्रीप्रसन्नधीः ।
महाकारुण्यभद्रात्मा महानंदप्रमोदितः ॥११४॥
सदोपेक्षाप्रसन्नात्मा चतुर्ध्यानाभिनंदितः ।
समारूप्यसमापत्तिसंप्राप्तोऽभिहतेंद्रियः[1] ॥११५॥
पंचाभिज्ञपदप्राप्तो वासनासंधिघातकः ।
शूरंगमसमाधिसंप्राप्तो भवेन्महर्द्धिकः ॥११६॥
इमा अष्टौ स शुद्धात्मा सर्वनिर्मलता लभेत् ।
यत्रायं धर्मपर्यायः प्रचरिष्यति सर्वतः ॥११७॥

[1] Ex conj °संप्राप्ताभिहर्तेंद्रियः C P

तत्रापि राज्यसंक्षोभभयं नैव भवेत्क्वचित् ।
दुष्टचौरभयं चापि दुष्टव्याडभयान्यपि ॥११८॥
ईतिदुर्भिक्षकांतारभयं चापि भवेन्न हि ।
विवादविग्रहोत्पन्नं भयं चापि स्पृशेन्न हि ॥११९॥
सर्वदेवभयं चापि नागयक्षादितो भयं ।
सर्वोपद्रवभयं च भवेन्नैव कदाचन ॥१२०॥
नेमान्यष्टौ भयान्यत्र चरेद्धर्ममिदं यतः ।
संक्षेपात्कथ्यते मार्षा यदेतद्धारणादिजं ॥१२१॥
पुण्यं महत्तरं श्रेष्ठं सर्वबुद्धैर्निगद्यते ।
यद्यपि प्राणिनः सर्वे भवेयुर्ब्रह्मचारिणः ॥१२२॥
तान् सर्वान् पूजयेत्कश्चित्सत्कृत्य श्रद्धया सदा ।
तस्मादिदं महत्पुण्यं विशिष्टं कथ्यते जिनैः ॥१२३॥
यश्चैकं पूजयेदेकं प्रत्येकसुगतं मुदा ।
[1]भवेयुस्ते प्रत्येकबुद्धास्तान् कश्चित्पूजयेत्ततः ॥१२४॥
पुण्यं विशिष्टमेकस्य बोधिसत्त्वस्य पूजनात् ।
ते सर्वे बोधिसत्त्वाश्च भवेयुः कश्चिदर्चयेत् ॥१२५॥
तस्माद्विशिष्टं पुण्यं च बुद्धस्यैकस्य पूजनात् ।
जिना भवेयुः सर्वे तान् पूजयेत्कश्चिदानतः ।
तद्विशिष्टं लभेद्यश्च शृणुयाच्छ्रावयेदपि ॥१२६॥
यश्चापि सद्धर्मविलोपकाले स्नेहं विहाय स्वशरीरजीवे ।
ब्रवीत्यहोरात्रमिदं सुभाष्यं विशिष्यते पुण्यमिदं हि तस्मात् ॥१२७॥

[1] Sic C P

योऽभीच्छते[1] पूजयितुं मुनींद्रान् प्रत्येकबुद्धांश्च सदार्हतोऽपि।
दृढं समुत्पाद्य स बोधिचित्तमिदं सुभाष्यं च ब्रवीतु धर्मं ॥१२८॥
रत्नं त्विदं सर्वसुभाषितानां यद्भाषते सत्त्वहिताय बुद्धैः।
गृहे स्थितस्तस्य तथागतोऽपि तिष्ठेदिदं यत्र सुभाषितं तत् ॥१२९॥
प्रभां स प्राप्नोति शुभामनंतामेकं पदं वा समुपादिशेद्यः।
न व्यंजनाद्भ्रश्यति नापि चार्थाद्ददाति यः सूत्रमिदं परेभ्यः ॥१३०॥
अनुत्तरोऽसौ नरनायकानां सत्त्वो न कश्चित्सदृशोऽस्ति तस्य।
भवेत्स रत्नेन समोऽक्षयश्रीः श्रुत्वापि यो धर्ममिमं प्रसन्नः ॥१३१॥
तस्मादिदं[2] धर्ममुदारकामाः शृण्वंतु नित्यं शुभपुण्यहेतुं[3]।
श्रुत्वानुमोद्य प्रणिधाय बोधौ भक्त्या त्रिरत्नं सततं भजंतु ॥१३२॥

इति श्रीबुद्धचरिते महाकाव्येऽश्वघोषकृते धर्मचक्रप्रवर्तनं
नाम षोडशः सर्गः ॥१६॥

[1] पीच्छते P [2] Sic C P, should we read इमं? [3] Sic C P.

# BOOK XVII.

[1]शाक्यसिंहोदितं धर्ममाहात्म्यकं ब्रह्ममुख्याः सुरा बोधिसत्त्वा-
स्तपस्यापरे[2]
ते समाकर्ण्य दुर्लभ्यमेतत्पुनः श्रोतुकामाः पुरं जग्मुरेवं प्रसा-
द्यार्चयन् ।
कृष्ण आषाढमासे तिथावग्निदैवे च भे कर्णसंज्ञे च चंद्रे दिने
सत्क्षणे
बुद्धलोकाननुस्मृत्य सर्वाञ्जनान् उद्धरिष्णुः प्रजास्तातपूर्वाः स-
मिच्छन् प्रतस्थे[3] ॥१॥

[1] These opening stanzas are very confused in the MSS C, on fol 108 *b*, reads (after *śâkya—pratasthe*) enclosed in brackets and not numbered, the lines (see 6, 7) श्रीघनो—पुरीं, then काशिराजं—भक्तितः । and then a fragment of sloka 25 कोटिशो—अंधकान् कुंब्जिकान्; the rest of this sloka with sloka 30 is given on fol. 115 *a*, which was originally numbered 109 *a* (ff 110–114 having been inserted afterwards), C thus originally had only these five slokas of Book xvii The MS now proceeds regularly on fol 109 *a* with our (2) numbered as (1), our (3) as (2), our (4) as (3), our (5) as (4), स्वस्तिको— as (5 *a*), नाविको— as (5 *b*), our (8) as (6), &c D begins with (1) and (2) both numbered (1), (3) as (2), (4) as (3) (5) as (4), स्वस्तिको— and नाविको—as (5 *a* and *b*), &c D omits the lines श्रीघनो—पुरीं, and (7) altogether Our printed text follows P in its order of the slokas

[2] Ex conj तपस्याः परे C P

[3] C D P have this sloka here, but not numbered with the others. C adds here the lines beginning *srîghano* and *kâśirâgam*, see infra D omits them.

मृगवनगतकाशिकान्वागता ब्राह्मणा गोष्ठिकास्त्रिंशसंख्येयका भि-
    क्षवः श्रीमुनींद्राद्बभुः
त्रिदिवभुवनमागमत्काशिका काशिदेशीयवेश्यार्चयित्वा जिनं सं-
    नियोज्यात्मजाञ्छ्रीघने ।
मुदितहृदययाज्ञिकान्[1] काशिदेशीयकांस्त्रिंशतः श्रावकांल्लोकजि-
    त्प्राकरोद्बोधिचर्यां[2] ददन्
द्विजगणगुरुमैत्रमैत्रायणी[3]पुत्रपूर्णाभिधः प्राप्य बोधिं[4] बभूवार्य-
    भिक्षुर्मुनींद्राद्थो ॥२॥
मरकतनिगमावनीपालयष्टाऽजयाख्यो द्विजस्तत्सुतो नालका-
    ख्यः श्रुतिं धारकः सोत्तरः
धृतिसमभिधतापसो विंध्यवासी तथा चाजितः संजयी शिष्य-
    वर्गान्वितो ब्राह्मणस्तापसः ।
शरणमभिगतान् मुनींद्रोऽकरोत्तांश्च भिक्षून् करेण स्पृशंश्चक्रचि-
    ह्नेन विंध्याचले वासिनः
मुनिवरपदमाश्रितश्चैलपत्रोऽपि नागो बभौ शांतचर्यान्वितो
    रत्नमालाभिरर्चयन्सन्[5] ॥३॥
त्रिकव्यंगिका नाम संन्यासिका माथुरीया च विद्याकराख्यश्च
    विप्रो बभूव
तयोरात्मजः श्वेतबालार्कदेशीयसभ्याभिधो ब्रह्मचारी सुविज्ञोऽभि-
    मानी ।

[1] °याजिकान् P [2] °ल्लोकजिन्नांश्चकाराग्रु दत्वार्यकं P [3] °ण्ी C P
[4] बौद्धीं C, बोद्धी D बौद्धं P. [5] Metre incorrect °mâlâbhir anvar?ayan ?

वने मार्गदावे गतश्चोत्तराद्भिक्षुवर्याद्विबुद्धोपमानी महाबोधि-
कामः
स सर्वज्ञमभ्यर्थयन्नार्यचर्या बभूवोत्तमः सभ्यभिक्षुः प्रसिद्धः
सभासु ॥४॥
वरणातटसंभववृक्षवरार्चनतो जनितो ललिताप्रबुधात्मभवः
स यशोद इति प्रथितो भुवने सुरराजवचोऽमृतसिंचनतो विबुधः।
समनुस्मृतपूर्वकथो मृगदाववनं ससखोऽभ्यगमद्यशसा सहितः
भगवानपि तं स्वकरेण मृजञ् शिरसि प्रचकार महोत्तमभिक्षु-
गुरुं ॥५॥
श्रीघनोऽसौ महाबुद्धनामा प्रतस्थे समं भिक्षुभिर्भद्रवर्गीयकै-
श्चान्वितः
चंक्रमाख्यां च यात्रां जगद्रक्षणार्थं महर्द्धि प्रकाश्याविशत्काशि-
काख्यां पुरीं[1] ।
स्वस्तिको नाम वाराणसीयो दरिद्रो द्विजः श्रीघनस्य प्रसादा-
प्रद्रव्यो दिवो[2]
दासभूयं जिने शासने संनियोज्यानुप्राप्याभवद्भिक्षुरर्हन्मुनींद्रा-
च्चरीं[3] ॥६॥
काशिराजं दिवोदाससंज्ञं सुवर्णीयधान्यादिभिर्वधयन् पौरलो-
कांस्तथा

[1] P inserts these two lines here, D omits them, C inserts them after 1 *a*, see supra. In line 1 C in its version reads ततः for समं, and in line 2 पंचकैः for भिक्षुभिः.
[2] दिवा P    [3] Apparently for चर्या, cf sloka 13

देशदेशांतरे कानने गह्वरे पर्वतेऽस्मिन्विहारे वसन्नागमज्जाह्नवीं[1]।
नाविको जाह्नवीं पारयित्वा जिनं पूजयामास पूजोपचारैर्ददौ पायसं
तत्प्रसादाच्च भिक्षुर्बभूवाथ वासं जिनस्याज्ञया प्राप बौद्धाश्रमे
कानने ॥७॥

जाह्नवीमुत्तरञ्छ्रीघनः काश्यपस्याश्रमं चोरुविल्वाभिधानं[2] गया-
यां ययौ
तत्र चर्द्धि[3] प्रकाश्योरुविल्वादिकान् काश्यपाञ्शिष्यसंघैः सह-
स्राधिकैरन्वितान् ।
भिक्षुवर्यांश्चकाराशु तान् बोधिचर्यासु संयोजयित्वा प्रवृत्तेर्नि-
वृत्तौ पुनः
शिष्यसंघैः शतानां त्रिभिः संयुतश्चोपसेनाभिधो मातुलस्याज्ञ-
याभूद्यतिः ॥८॥

धर्मसंज्ञाटवीसंस्थितान् सप्तसंख्याशतांस्तापसान्निर्वृतान् संव्य-
धाच्छ्रीघनः
ग्रामिकास्ताः सुजातादिका नंदिकस्यात्मजा भिक्षुणीश्चाकरोद्ध-
र्मराट्पौर्विकाः ।
राजगेहाभिधे पत्तने [4]बिंबिसारं नृपं बुद्धिसाराग्रजन्मानुमेयं विभुं
बोधयित्वा प्रवृत्त्या निवृत्त्याकरोद्बुद्धसेवापरं बोधिसत्त्वं सकृद्गा-
मिनं ॥९॥

[1] P inserts these two lines here, [illegible] omits them, C inserts them after 1 *a*, see supra. C reads the last words as *vasan nirmite bhaktitah* [2] Ex conj. °धा[illegible] C P
[3] चार्द्धिं C P. [4] विम्ब° P.

ततोऽन्यत्र ग्रामे च नारद्यसंज्ञे द्विजो धर्मपाली च शाल्याभिधा ब्राह्मणी च

तयोरात्मजः सप्तमश्चोपतिष्याभिधोऽभूच्चतुर्वेदपारंगतो बौद्धभिक्षुः।

तथा कोलतग्रामवासीयधान्यायनाख्यो [1]महापंडितोऽभूद्विजस्त-त्सुतश्च

स मौद्गल्यनामा च शालीसुतोऽसौ मुनींद्रश्चकाराशु तौ भिक्षु-वर्यौ सुशिष्यौ ॥१०॥

मातुलं शालिपुत्रस्य [2]दीर्घानखाभिज्ञकं तीक्ष्णबुद्धिं चकाराथ भिक्षुं वरं

मागधे वैषये संचरञ्छ्रीजिनो मागधैः पूजितः पिंडपात्रादिभि-श्चोद्धरन् ।

जेतनामर्षिणा संप्रदत्ते विहारे वसन्नाश्रमस्थान्बहून् संनियो-ज्यात्मनि

मैथिलेयं तथानंदसंज्ञं सहायान्वितं भिक्षुवर्यं च कृत्वावसद्व-त्सरं ॥११॥

द्विजः काश्यपाख्यो धने यक्षराजो गुरुर्वेदविद्यासु राजादिगे-हाख्यदेशी

[3]सुचित्तः पटं चैकवास्यं समाधाय सर्वान् विहायागमत्तापसे[4] बोधिमीप्सुः ।

यदा बोधिवृक्षाश्रितोऽसौ कुमारस्तपः प्राचरद्दुष्करं तत्षडब्दं महात्मा

[1] द्विजो वेदपारगतस्तत्सुतोऽभूत् P [2] दीर्घनखा° P [3] O1 सुवित्तः ? [4] °सं D

ततोऽवाप्तबोधिं मुनींद्रं समर्थ्याभवत्काश्यपोऽसौ यतीशोऽर्हता-
मग्रगण्यः ॥१२॥

नरदत्तमुर्निर्हिमशैलनिवासपरः समनुस्मृतमातुलपथ्यवचाः
सुगतं समगात्सहशिष्यगणो भगवानपि तानकरोज्जिनशासन-
गान् ।

अथ शक्त्यभिधा कमला द्विजशक्तिवरे ययतुः सुगतं प्रणिपत्य च तं
स्थित[2] अग्रत एव ततो मुनिनाऽकृत ते वरखिक्खिरिपात्रधरे
सुभगे ॥१३॥

शतसप्तकरुद्रकतापसशिष्यगणा गुरुवाक्यमुदारमनुस्मरिताः
जिनशासनतः श्रमणाः परितो व्यचरन्नुपकारपरा धृतखिक्खि-
रिकाः ।

अथ रैवतसंज्ञ ऋषिर्मुदितः स्तुतिकृत्समवाप्य चरीं समभूच्छ्रमणः
गुरुभक्तिपरः समकांचनमृत् ससमाधिसुधारणिभृत् त्रिविषाद्य-
पहृत् ॥१४॥

पूर्णसंज्ञादिकाञ्छ्रावतीयान्[2] गृहस्थान् विधायानुगाञ्छ्रावकान्
पिंडपात्रान्वितान्

दुःखिनोऽनेकशः श्रीदतुल्यांस्तथा चांगहीनान् सुपुष्टाननाथाद्य-
पिंडादिकान् ।

देशयित्वा च धर्मं समुद्धारयञ्जेतकारण्यमाश्रित्य वर्षद्वयं श्रीघनः
जेतसंज्ञं मुनिं बोधयित्वा पुनः पूर्णभिक्षुं ततः स्थापयित्वा प्रतस्थे
ततः ॥१५॥

[1] समर्च्या° ?    [2] Sic !

अथ प्रस्थितः श्रीघनश्चौरसंघेभ्य एतानवन् सार्थसंघान्निधा-
नोद्भवैः स्वैः
ततः संचरन् पिंडपात्रं गृहीत्वा वणिक्संघदत्तं ययौ राजगेहो-
पकंठे[1] ।
अथो वेणुसंज्ञे वने शालपूर्णे च चौरैर्धनाढ्यैः प्रदत्तं जघासा-
र्घ्यभोज्यं
तथा सप्तसंख्याशतांश्चौरसंघानकार्षीच्छ्रमण्यांश्च तान् पिंडपा-
त्रादि दत्वा ॥१६॥
आमंत्रणे बुद्धपुत्रस्य शुद्धोदनो वार्तिकौ[2] प्राज्ञपच्छंदकोदायि-
नावेव[3]
त्वद्दर्शनाशाश्रितौ मातृतातौ यशोधृक्प्रमुख्या महिष्यः सुतो
बालकोऽसौ च ।
संसाररक्षापरस्त्वं हि ताततेति[4] बुद्ध्या[5] किमु ज्ञापयामीत्यहं तौ च
.जग्माते
तौ वेणुसंज्ञे विहारे श्रितं[6] बुद्धमानम्य जिज्ञापयां[7] चक्रतुः सा-
श्रुनेत्रौ तत् ॥१७॥
छंदकोदायिनौ मंत्रणे संमतौ बुद्धमाहात्म्यतुष्टावभूतां यतीशौ परौ
तौ पुरोधाय तस्माद्वनात्संप्रतस्थे जिनेंद्रः सह श्रावकैर्भिक्षुभिः
साधुभिः ।

[1] राजगेहांतिके कानने C D [2] Ex conj वार्तिकः C P [3] °नावेष P, °नावेच C [4] Sic C P Query हितार्येति ? [5] बुध्वा D, बुद्धः P, not clear in C [6] वने संस्थितं P [7] Sic C P

देशदेशांतरे संक्रमन् संवसन्नुद्धरन् वर्धयञ्छ्रावकांश्चैरिकानर्हतः[1]
प्राप निग्रोधसंज्ञं वनं भासयंस्तेजसा कंपयन्मेदिनीं नाशयन्
दीनतां ॥१८॥
चोदयामास भूयः प्रजा बुद्धसंदर्शनेऽथो ययौ संगतैर्लोकसंघैस्ततः
मुंडितान् भिक्षुकानध्वगान् पिंडपात्रार्थिनो दर्शयन् देवदत्तानु-
बोधस्ततः ।
वारयामास भिक्षून् पुरीसंगमेऽथो स्वयं प्रागमद्राजगेहं प्रति
स्वैः सह
पर्षदि द्वापरेऽस्थो[2] नृपोऽथो जिनो भिक्षुवार्ताभिबोधी यतिं
प्राज्ञपद्बोधने ॥१९॥
जिनशासनतोऽभ्यगमन्नगरे कपिले यतिराट् स उदाय्यभिधो
ह्यथ च
नृपतिं सदसि स्थितमष्टशतर्द्धिवरं समदर्शयदृद्धिवतामधिपः ।
गगणा[3]दवतार्य च तं नृपतिं चतुरार्यकसत्यकथामकथत्ससभं
प्रतिपूज्य च तं नरराडनुबुद्धमनाः सजनः समगात्सहपूज्य-
विधिः ॥२०॥
मुदितो नृपतिर्जिनदर्शनतोऽष्टशतोपकरैः प्रतिपूज्य ववंद पदौ
सुगतोऽप्यगमद्गगणे[4] ह्यथ विश्वमयाकृति रूपमदर्शयदेकतनुः ।
प्रथमं ज्वलनो ह्यमृतं मृगराड् द्विरदो हयराट् शिखिराट् खगराड्
मघवा

[1] चैरिकांनर्हतः C P [2] द्वापरेस्थो DP; द्वापरोस्थो C [3] ०न० C P. [4] ०ने C P.

यमराजमुखा दशलोकवरा दिनपो निशिपो भगणा विधिवि-
ष्णुमृडाः ॥२१॥
दितिजा[1] धृतराष्ट्रमुखाश्चतुरो द्रुमसिद्धमहीपति[2]योगिगणा यतयः
वसवो मनवो वनजा मकरप्रमुखा जलजाः खचरा गरुडप्रमुखाः।
तुषिताधिपतिप्रमुखा भुवननेष्वपि[3] मर्त्यपुरे बलिसद्मनि ये
ह्यधिपाः
[4]यतरङ्गुवने विलसत्यखिलं भगवानदधात्[5] खलु विश्वमयः
सकलं[6] ॥२२॥
विज्ञप्यमाने नृपे [7]सत्यलोकेऽवतीर्णोऽतरीक्षात्स्व[4] आसीन एवं
मुनीशो
ऽकथद्द्वादशाकारधर्मं पुनर्गौतमीं लोचनाढ्यां विधायानुगोपादि-
कास्ताश्च।
कृत्वा मुदाढ्याश्च सर्वाः प्रजा मोदयामास चक्रे निवृत्तौ परांश्चापि
धर्मेषु
आनंदपूर्णोऽथ शुद्धोदनः प्राकरोन्मंत्रणां संघभोज्ये[8] च तूष्णी-
मभूत्सोऽथ ॥२३॥
आमंत्रितः शाक्यसिंहोऽथ सार्धं स्वसंघैर्महत्प्रातिहार्यं प्रकाश्या-
गमद्देशे
भूमिस्तदाकंपयत्पुष्पवृष्टिश्च जाता दिशः[9]संप्रकाशा ववौ वायुरेवं च।

[1] दितिजो C D P. [2] °यागि° D [3] Ex conj °प्रमुखो भुवनेट् स्वरि C D P
[4] Sic MSS [5] Ex conj अदधत् C D P [6] सकलः C. [7] D सत्य°
C P सभ्य°. [8] °भोज्यं D [9] सप्रकाशा?

शेषस्य पृष्ठे पदं[1] संदधाना विधीशाच्युतेंद्रांतकापांपतिश्रीदभूतेश-
वायव्यनैर्ऋत्यसप्तार्चिराद्याः सुरास्तान् पुरोधाय खेऽनृत्ययन्
.देवगंधर्वान् ॥२४॥
कोटिशो भिक्षुकाञ्छ्रावकानर्हतः प्राज्ञिकांश्चैरिकानौपवासान्
प्रकुर्वंस्तथा
अंधकान् [2]कुब्जकान् पंगुकानुन्मदानंगहीनांस्तथा द्रव्यहीनान्
यथोद्धारयन् ।
तुर्यवर्गीयलोकान्नियोज्य प्रवृत्तौ निवृत्तौ त्रियाने चतुःसंग्रहे
ऽष्टांगिके
चंक्रमंश्चंक्रमन्नुद्धरन्वर्धयन् भिक्षुकान् द्वादशेऽब्दे पुरं स्वां ययौ ॥२५॥
प्रत्यहं वर्धयन् भिक्षुकान् संघभोज्यं च कृत्वा मुहूर्ते शुभे लुंबि-
नीयात्रिकां
प्राचरद्भिक्षुभिर्ब्रह्मरुद्रादिभिः पौरलोकैः समं सो[3] महोल्लासवा-
द्यादिभिः ।
प्लक्षवृक्षं ददर्शाथ जन्मानुभूतं स्मरन्संस्थितः संस्मितो[4] वक्त्रतो
निर्गता
रश्मयो द्योतयित्वा भुवं वेविशुः[5] संप्रसाद्याथ देवीं वनस्थाम-
वादीत्कथां ॥२६॥
पौर्विकां राहुलीयां तथा गोपिकां मैत्रकन्यां स्वकीयां च तां
सौधनीं कौशिकां

[1] So D; संदधानो C P. [2] कुब्जिका[illegible] C D P. [3] Sic MSS.
[4] सस्मितो ? [5] केविशुः C D P.

लुंबिनीप्लक्षमाश्रित्य चाथो तडागे वसत्याभिधेऽसौ प्रियां मातृपौषीं कथां ।
एकशांगीं महाकौतुकीयां पुनः सौतसोमीं[1] नियग्रोधसंज्ञे वने संवदन्
सुंदरानंदमुख्यान् स्ववंश्याञ्शतं सप्त प्राव्राजयत्पौरलोकानपि[2] ॥२७॥
बुद्धधर्मानुभावं प्रकाश्याप्यसौ स्तूपविम्बं विनिर्माय राज्याभिषेकं ददन्
सौनवे प्रेषयन् भूपतिं चैत्यभट्टारकाग्रे वने धर्मधातुं समभ्यर्चयन्।
राहुलं गौतमीं गोपिकाद्याः स्त्रियः खिक्खिरीपात्रहस्ता महामुंडिता भिक्षुणीः
चारयित्वा ह्यहोरात्रसंज्ञं व्रतं लक्षचैत्यं पुनः [2]शार्ङ्गभैयं वसुंधारिकां ॥२८॥
अष्टसाहस्रिका नैगमा गेयगाथे निदानावदानौ महायानसूत्राभिधं
व्याकरेत्युक्तके[3] जातकं वैपुलाख्याद्भुते चोपदेशं [4]तथोदानकं[5] द्वादशं[6] ।
पाठयंश्चारयञ्श्रावकं चापि प्रत्येकयानं महायानिकं संप्रकाश्याभितः
सार्धमर्धत्रयोदश्यभिक्षाक्तसंघैः परैः कापिलाद्देशतो निर्ययौ लोकजित् ॥२९॥

[1] So D, सौतसौमीं C P. [2] So C P D [3] ०कं ? [4] तथोद्दानकं C P D.
[5] P inserts here चारयन्. [6] द्वादश C P D.

दर्शयन् प्रातिहार्यं पुरे कापिले तातमानं तथा राहुलाद्यान्
विधायार्हतः
भिक्षुणीर्गौतमीगोपिकाद्याश्च रामाश्चतुर्वर्गिकाश्[1]चक्रवर्त्यासने सौ-
नवं ।
स्थापयित्वा जिने शासने ताञ्जनान्[2] नाशयित्वा दरिद्रांधकारं
स्मरन्मातरं
श्रीस्वयंभ्वर्चने चोत्तरादिङ्मुखः संप्रतस्थे समं भिक्षुभिर्ब्रह्मवि-
ष्णवीश्वरैः[3] ॥३०॥
शाक्यसिंहस्य जन्मावदानस्य माहात्म्यमेवं मया भूरिशो वर्णितं
स्वल्पशः
पंडितैः शोधनीयं यदत्र च्युतं बालसंभाषणं नोपहास्याय हर्षाय
भोः[4] ।
विश्वरूपाकृतेर्धर्मराजस्य संसाररक्षाकृतो वर्णनात्कौशलं यन्मम
अस्तु तत्पुण्यपुंजं प्रवृत्तौ निवृत्तौ जनानां प्रमोदाय षड्योनिषु
स्थायिनां ॥३१॥

इति श्रीबुद्धचरिते महाकाव्येऽश्वघोषकृते लुंबिनीयात्रिकं
नाम सप्तदशः सर्गः[5] ॥१७॥

[1] ०कांश्चक्र० C P D. [2] जिनाम् C P D [3] This sloka is afterwards repeated in C, not in D (cf. var lectt. in the note [illegible] oka 1), reading as line 3, स्थापयित्वा प्रवृत्तौ निवृत्तौ जनान्नाशयित्वा दरिद्रांधकारं प्रक श्य स्मृतिं. [4] भो C P D.
[5] P adds खबाणांकमिते वर्षे आग्रहायनिके सिते ॥ यमेऽमृतानंदो लिख.

C alone adds here on the last page the following important lines:

शून्यबाणांकयुग्वर्षे[1] मार्गे मासेऽसिते स्मरे ।
अमृतानंदेन लिखितं बुद्धकाव्यं सुदुर्लभं ॥१॥
सर्वत्रान्विष्य नो लब्ध्वा चतुःसर्गं[2] च निर्मितं ।
चतुर्दशं पंचदशं[3] षोडशं सप्तदशं तथा ॥२॥

Then follow on the same page of C, twenty-four lines of Hindî (which are written partly in the text and partly in the margin round the four sides) in praise of *S*rî Râ*g*endra-vikrama, his son *S*rî Surendra-vikrama, and their minister Bhîmasena. This has been discussed in the Preface.

[1] This gives the date 950 = A D 1830, as the Newâr era commenced in A D 880.
[2] Written pr m सर्गचयं, but चतुःसर्गं written over as a correction. [3] °श्च C.

# APPENDIX.

## NOTES TO THE SANSKRIT TEXT[1].

i. 19 For *Tushitât kâyât* cf *Tushite devanikâya upapannâ*, in *Divyâvad*. p. 83.

i 33 *a*. M Sylvain Lévi proposes a preferable reading for this obscure line, *amgasam udgatâni*.

i 44 Serpents are called *vâyubhaksha*, see Ind Spruche, iii 4738, Raghu V. xiii 12, cf also *infra* vii. 15

i 66 Should we read आचिताग्रः for अंचिताग्रः?

i 68 The reading of P *mune* is the best

i 72. '*Asmi—aham ityarthâvyayam*,' cf the example quoted in Mallinâtha's note, Kirâtârg iii 6 *Sundari nâsmi dûye*.

ii 25 *c d* Could this mean 'the interests of the king of the present *S*âkya race sought to turn the prince to sensual pleasures?'

ii. 39 ['The Tibetan reads dge vai tha ñad gèañ ma la ni bsñen gyur la, "following the welfare pure from business." Did they read vyavahâra-suddham?' H. W] Should we translate *avyavahâram*, 'without litigation?' Prof. Max Muller would read *vyavahâralabdham*, 'he pursued all bliss which could be attained by *vyavahâra*,' i e in the lower *vyâvahârika* sphere.

ii 40 *Dvidarpam*, 'possessed of double pride,' cf. *dvisavasam* (*madam*), *Rig*-veda ix. 104, 2.

ii. 41. The Tibetan, like the Chinese, gives no help here

iii. 44 'The Tibetan seems to have read *rugâmtare*,—nad thar phyin·na, "having come to the end of illness"' H W

iv 14. Dr. Wenzel gives the Tibetan as 'this your behaviour, which is like that of a new bride who from shame contracts her eyes, is worthy of the wives of the cowherds' (ba glañ skyoñ gi chun mar os)

iv 73. Cf. *Rig*-veda i 179, Mahâbh iii [illegible]

[1] As an English translation will shortly appear in a volume of the 'Sacred Books of the East,' these notes are chiefly confined to difficulties in the Sanskrit text The information regarding the Tibetan translation has been kindly furnished by Dr H. Wenzel

v 3 Correct the text to ka*m*thakam as this is the more common reading in the MSS, and I have adopted it elsewhere, except in viii 19, where all the MSS have *mth* Compare the Pâli form, and the gana *gargâdi*, Pân iv 1, 105.

v. 11 *c* For *imam* we should read *idam* (cf. a similar confusion in vi 25 *a* and vi. 30 *b*)

v 62 ['The Tibetan has de'ltar sems'pa daṅ ni rigs kyi rjes ₒgroi gzugs, "thus mind and race after-going shape"' H W.] This would suggest *anurûparûpa.*

vi 3. 'The Tibetan has the obscure raṅ gi rjes su bsrun va la = स्व + अनु + रचन्?' H W

vi 9 Could *gaṇi-bhavati* be used as a quaint expression for *paragano bhavati* ('even one's own people commonly become mere strangers in a reverse of fortune')? ['The Tibetan reads pha rol skye vor,—this might mean *paragana*, "man of another party," *svagana* had been just before translated raṅ gi skye vo' H W]

vi. 62 I take *ârât* as a wrongly-formed aorist ['The Tibetan seems to have read *kâmasârât*, ₒdod pa sñiṅ po las, "from essence of desire."' H. W]

viii 78 *Dasakshatrakrit* is an obscure phrase ['The Tibetan renders it by rgyal'rigs bcu byas, "king-race ten made," rgyal rigs is the ordinary translation of *kshatriya*' H. W]

ix 14. *Akyâvinam* is conjectural, we might read *vyâpinam.* ['The Tibetan renders *b*, khyod kyi ₒbyuṅ var ₒgyur var don ni çes pao, "I know thy purpose which is about to arise (or which has arisen) in thy mind." Can they have read भाविनं or भावितं?' H W]

ix. 20 For Antideva see i. 57 and ix 60 My reading *pâkadrumam* is purely conjectural, 'king Senagit's son, his tree of ripe blessing, cf Mahâbh xii 6524 &c ['The Tibetan has brtan pai (ध्रुव) nu vo, "the firm one's younger brother (?)," it also has ₒgro daṅ ljon çin can for पाकद्रुम, "having a tree of —?" It takes सेनजितस्य राज्ञः as acc plural' H W]

ix 36 ['The Tibetan has for प्रलभ्य rab tu bslas nas, "having deceived"' H W] Cf. Horace, 'vivens moriensque fefellit' ['The Tibetan has for the fourth pâda de ltar (एवं) ₒdor ldan skye la rjes su rten rnam ci, "thus what kind of reliance is there on man who is of a leaving disposition."' H W] Should we read in the Sanskrit,

इत्येवं जने त्यागिनि कोऽनुरोधः ॥ ?

ix 60. This might mean Antideva (cf i 57, ix. 20) the son of Sa*m*kriti, but in Mahâbh xii 1013 we have Rantideva the son of Sa*m*kriti; cf Burnouf on Rudraka and Udraka, *Introd* p 386 ['The Tibetan takes सांकृति as sbyin sreg'daṅ bcas, "together with burnt-offering."' H. W] Would this imply an old reading साकृति?

ix 72 The reading *kumârânveshano* in the colophon here and in the subsequent books is correct, cf the colophons in the Kirâtâr*gunîya* and St Petersb Dict *varnana*

x 26. 'The Tibetan translates *d*, dam pa inams dan bcas pas dam pai dpal ophel·lo, "by being with the good the prosperity of the good increases"' H W

xi 6·*b* This line does not scan, and seems corrupt. ['The Tibetan reads khyod kyi (ते) nes pa (विनिश्चय) gan zhig bdag la dmigs pa odi, "whatever a determination of thine imagines of me, to this (answering I would say)"' H W ]

xi 70 This verse is obscure, and the division of the clauses uncertain The Chinese translation gives only six, but *ava* seems to occur eight times, the Tibetan has its equivalent *sruns* nine times. It renders *avâyur âryaih* by che sruns ophags pa yis, 'life protect by the noble'

xi 71 Cf Beal's Chinese transl, vv 912–915 throw some light on this hard passage it seems to mean, 'As in the midst of a sudden catastrophe arising from the flame of (fire) the enemy of cold, a bird, to deliver its body, betakes itself to the enemy of fire (water),—so do thou, when occasion calls, betake thyself, to deliver thy mind, to those who will destroy the enemies of thy home,' i e he is to destroy the passions, the enemies of the summum bonum, by their opposites (cf Manu vii 158)

xii 92. I have printed *shat karmaprepsuh* instead of the *shatkam aprepsuh* of the MSS, as it is supported by the Tibetan, las·ni thob bzhed lo drug tu, 'wishing to obtain (the fruits of good) works, during six years'

xiii 33 'The Tibetan seems to read धर्मविधेः, as it has chos kyi cho ga de ni, "(injurer) of that rite of dharma"' H W

xv 13 Cf Lalita-Vistara xxiv (Calc ed. p 490), *ratiskâratiska trishnâ ka*

# INDEX OF PROPER NAMES[1].


Akanishṭ*h*âs, the, v 47
Akshamâlâ, iv 77
Agastya, iv 73, ix. 26
Agni, iv 76, vii 17
Agnisûnu, i 66
A*m*giras, i 46, ix 10
A*g*a, viii 79
A*g*apâla-vana, xv 53
A*g*aya, xvii 3
Atri, i 48
Anugopâ, xvii 23
A*m*tideva, i 57, ix 20, 60
A*m*dhakâ*h*, the, xi 31
Apsaras, i 95, iv 11, 28, &c
A*m*barîsha, ix 59
Arâ*d*a, vii 54, ix 6, xi. 69, xii 1–81, xv 89
Alakâ, iii 65
A*s*vinau, the, vii 7
Asita, i 54, 67, 85, ii 25, viii 84.
Asita, iv 100, vii 32
Ahalyâ, iv 72

Âki*m*kanyâ*h*, xii 63 (cf 83)
Âtreya, i 48
Ânanda, xvii 11
Âbhasurâ*h*, the, xii 53

Ârati, xv 13, 20
Âshâ*dh*a, ix 20.

Ikshvâkavas, the, i. 49, vii 6, ix 4, xii 1
Indra (Maghavat, *S*akra, &c), i 7, 27, 29, 63, 92, ii 27, iv 72, v 22, 27, 87, vi 62, vii 3, 43, viii 64, 73, 79, ix 5, 10, 12, x 19, 39, 41, xi 13, 14, 16, 70, xiii. 9, 37

Î*s*vara, ix. 53, xvii 30

Ugrâyudha, xi 18
Uttare kurava*h*, the, iv 10
Udayagiri, x 15
Udâyin, iv 8, 24, 62, xvii 17, 18, 20
Udraka, xii 82–86 (cf. Rudraka).
Upatishya, xvii 10.
Upasu*m*da, xi 32.
Upasena, xvii 8
Uruvilva, xvii 8
Urva*s*î, xi 15

*R*ishya*s*ri*m*ga, iv 19

Ek[illegible]*n*gî, xvii 27
Ela[illegible], xvii 3


[1] This Index omits some of the obscure names in the last book

A*id*a, xi 15; xiii 12

Autathya, iv 74.
Aurva, i. 29
Aurvа*s*eya, ix 9

Ka, ii. 51
Kakshîvat, i 29
Ka*m*thaka, v. 3, 68, vi 53, 55, 67, viii 3, 17, 19, 32, 38, 43, 73, 75
Kapi*m*galâda, iv 77
Kapila, i 2, 94, xii 21
Kapilavastu, i 2 (?), 94, v 84, vi 30, 51, viii 5, xvii 20, 30
Kama*nd*alu, xv 96
Kamalâ, xvii 13
Karâla*g*anaka, iv 80
Kâma, iii 24, iv 4, xiii 2.
Kâmâva*k*arâ*h*, the, xiv 88
Kârttikeya (sha*n*mukha), i 93
Kâla, xii 113
Kâlâma, xii 2
Kâlî, iv 76
Kâ*s*ikâ, xvii 2
Kâ*s*isu*m*darî, iv 16
Kâ*s*î, Kâ*s*i, xv 89, 90, 101, xvii. 2, 6
Kâ*s*yapa, xvii 12
Kâ*s*yapâ*h*, the, xvii 8
Kurava*h*, the, xi 31
Kuvera, i 94, iv 10, v 45, 85, xvii. 15
Ku*s*ika, i 49
Kailâsa, i 3, 21, ii 30, x 41
Kolata, xvii 10
Kaurava, iv 79

Ga*m*gâ, ix 25, xv 98, xvii 7
Ga*m*dha, xv 97.
Ga*m*dhapura, xv 97
Gaya, xii 87
Gayâ, xv 91, xvii 8
Garu*d*a, xvii 22
Garutmat, xiii 54
Gopikâ, xvii 27, 28, 30
Gautama, iv 18, 72, xv 104
Gautamî, viii 24, 51, xvii 23, 28, 30

Gh*ri*tâ*k*î, iv 20

*K*a*m*dramas, iv 75
*K*aitraratha, iv 78
*K*yavana, i 48

*Kh*a*m*da, *Kh*a*m*daka, v 68, vi 4, 14, 25, 43, 65, vii 1, viii 9, 23, 32, 42, 73, xvii 17, 18

*G*anaka, i 50, ix 20, xii 67
*G*aya*m*ta, ix 5, 12
*G*inakshetra, xv 114.
*G*uhvatî, iv 75
*G*eta, xvii 11, 15
*G*etakâra*n*ya, xvii 15
*G*aigîshavya, xii 67

Târkshya, vi 5
Tushita Tushitâ*h*, the, i 19, xiv 89 xvi 111
T*ri*sh, xiii 3
T*ri*sh*n*â, xv 13, 17
Trayastri*ms*ad-devâ*h*, xiv 89
Trikavya*m*gikâ, xvii 4

Da*m*dakâ*h*, the, xi 31
Da*s*aratha, viii. 81
Dâ*s*arathi, viii 8
Divodâsa, xvii 7
Dîrghânakha, xvii. 11
Devî, i 66.

Drumasiddha, xvii. 22.
Drumâksha, ix 60.
Drumâb*g*aketu, the Moon? v. 3

Dharma*k*akra (*g*ina*g*a), xv. 119
Dharmapâlin, xvii 10.
Dharmaru*k*i, xv 86
Dharmâ*t*avî, xvii. 9
Dhânyâyana, xvii 10
Dh*r*itarâsh*t*ra, xvii. 22.
Dh*r*iti, xvii 3

Na*m*dana, iii 64
Na*m*dabalâ, xii 106.
Na*m*dâguhâ, i 19
Na*m*dika, xvii 9
Na*m*din, xv 93
Namu*k*i, xv 25, 46
Naradatta, xvii 13
Nalakûvara, i 94
Nahusha, ii 11, xi 14, 16.
Nâlaka, xvii 3
Nigrodha-vana (niyagrodha), xvii 18, 27
Nirmâ*n*aratayah, the, xiv 89.
Nirmitâ bodhisattvâ*h*, the, xiv 71
Naira*m*ganâ, xii 88, 105

Pa*m*ka-bhikshava*h* pa*m*ka-vargîyâ*h*, the, xii 89, 111, xv. 89, 104, 118 (cf Bhadravargîyâ*h*)
Padma, ii. 3
Padmakha*m*da, iii 63.
Paranirmita-vasavartina*h*, the, xiv 89
Parâsara, iv 76, xii 67
Pâ*m*dava (mountain), x 14, 17.
Pâ*m*dava*h*, the, x 17.
Pâ*m*du, iv. 79
Punarvasû, ix 11
Pura*m*dara, iv. 72; xiii 37
Pushya, i. 25.
Pûr*n*a, xvii 2, 15
P*r*ithu, i 29
Paurvikâ, xvii 27
Pra*g*âpati, xii 21
Prîti, xiii 3

Balabhid (Indra), x. 41
Bali, xi 16.
Bâlamukhyâ, iv 17
Bi*m*bisâra, xv 100 (cf. *S*re*n*ya); xvii 9
Buddhâ*h* (atîtâ*h*), i 38; xiv. 75, xv 8
Budha, iv. 75
Bodhidruma, xii 112, 116, xiii 7, 27, 32, 42, 68, xiv 90, xvii 12.
Bodhisattva, i 19, 24, ii 56, ix 30, x 18, &c
Brahmakâyikâ*h*, the, xiv 88
Brahman, i 1, xii 42, 51, 65, xv 18, 84, 118, xvi 93, 111, xvii 1, 24, 30

Bhadravargîyâ*h*, the five, xii 89, 111, xv 104, 115 (cf Pa*m*ka-bhikshava*h*).
Bhadrâsanâni, xv 114.
Bharadvâ*g*a, iv, 74
Bhava, i 93
Bhârgava, vi. 1, ix. 2, 3
Bhîshma, ix 25, xi 18
Bh*r*igu, i 46

Magadhâ*h*, the, x 10, 41, xi. 1, xvii 11
Maghavat, see India.
M[illegible]â, xvii 4.
Manu (Vaivasvata), viii 78.
Ma*m*thâlagautama, iv. 17
Ma*m*dara, vi. 13

Mamatâ (?), iv 74
Marakata, xvii. 3
Marutvat (Indra), viii 13, x. 39.
Maruts, the, v. 27
Mahâkautuka, xvii 27
Mahâraga*h*, the, xv 64, 74, xvii 22
Mahâsudar*s*a, viii 62
Mahendra, see Indra
Mahoragâ*h*, the, i 38
Mâdrî, iv 79.
Mâ*m*dhât*ri*, i 29, x 31, xi. 13
Mâyâ, i 15, 22, 37, ii 18.
Mâra, xiii 1–73, xv. 11, 37
Mârakanyâ*h*, xiii. 3, 14, xiv. 88, xv 13–36
Mârutî, iv 74
M*ri*gadâva, xv 87, 103, 114, xvii 5
Meghakâlî, xiii 49
Meru, v 37, 43, xiii 41, 57, xv 32
Maitra, xvii 2, 27
Maitrâya*n*î, xvii 2
Maitrîya, xv 118, xvi 1
Maitreya, xvi 53
Maithalâ*h*, the, xi 31
Maudgalya, xvii 10.

Yakshâdhipa, i 36
Yamunâ, ix 76, xii 107
Yayâti, ii 11, iv 78
Ya*s*oda, xvii 5
Ya*s*od*ri*h, xvii 17
Ya*s*odharâ, ii 26, 46, vi 34, viii 31, 60, 71.
Yâmâ*h*, the, xiv 89, xvi 110

Rati, xiii 3, 17, xv 13, 14
Râghava, vi 36
Râgag*ri*ha, x 1, 9
Râgageha, xvii 9, 12, 16
Râma (Dâ*s*arathi), viii 81, ix 9, 25, 59, 67.
Râma (Bhârgava), ix 25
Râhu, ii 46, ix 28
Râhula, ii. 46, viii 67; ix 28, xvii 27, 28, 30
Rudraka, xv 89, xvii 14 (cf. Udraka)
Raivata, xvii 14.
Rohi*n*î, iv 73
Rohitavastuka, xv 96

Lumbinî, i 23, xvii 27
Lopamudrâ, iv 73

Vagrabâhu, ix 20
Va*n*ârâ, xv 94
Vara*n*â, xvii 5
Va*s*avartina*h*, the, xvi 111
Va*s*ish*th*a, i 47, 57, iv 77, ix 60
Vasavas, the, vii 7
Vâmadeva, ix 9.
Vârâ*n*asî, xv 87, 101, xvii 6
Vâlmîki, i 48
Vâsava (Indra), xiii 9
Videhâ*h*, the, ix 20.
Vidyâkara, xvii. 4
Vindhya, xiii 38, xvii 3
Vindhya-kosh*th*a, vii 54
Vivasvat, iv 28
Vi*s*vâ*k*î, iv 78
Vi*s*vâmitra, iv. 20.
Vish*n*u, xvii 30
Vu*m*da, xv 95
Vu*m*dadvîra, xv. 95.
V*ri*tra, viii 13, xi 14.
V*ri*sh*n*aya*h*, the, xi 31
V*ri*hatphalâ*h*, the, xii 58.

V*ri*haspati, i 46, iv 74, 75, vii 43, ix 12
Ve*n*uvana, xvii 16, 17
Vaibhrâ*g*a, ix 20
Vai*s*va*m*tarâ*s*rama, xi 73
Vyâsa, i 47

*S*akti, xvii 13
*S*akra, i 63, vi 62, ix 12, x 19, xi 13, xv 65, xvi 93, 110
*S*a*m*khamedhîya (udyâna), xv 102
*S*a*k*î, ii 27
*S*âkya, *S*âkyâ*h*, the, i 7, 14, 54, 63, 93, ii 25, v 1, 36, vi 60, vii 13, viii 8, ix 11, 24, x. 11, xiii 43, xv 44, 85, 88, xvii 1, 24
*S*â*m*tanu, xiii 12
*S*â*m*tâ, iv 19
*S*âliputra, xvii 11
*S*âlî, xvii 10
*S*âlyâ, xvii 10
*S*âlvâ*h*, the, ix 60
*S*iva (Î*s*a, &c ), x 3, xvii 21, 24
*S*ivi, xiv 30
*S*ukra, i 46, ix 10.
*S*uddhâdhivâsâ*h*, the, iii 26, 56, xiii 31.
*S*uddhâvâsâ*h*, the, xiv 88
*S*uddhodana, i 9, 20, xvii 17, 23
*S*ubhak*ri*tsnâ*h*, the, xii 56
*S*auddhodani, ii 46, iii 40, xi 1
*S*auddhodaneya, xv. 118

*S*ravastî, xvii 15.
*S*re*n*ya, x 10, 16 (cf Bi*m*bisâra)
*S*vetabâlârka, xvii 4

Sagara, i 49
Sa*m**g*ayin, xvii 3
Sanatkumâra, ii 27, v 27
Saptarshitârâ, i 33
Sabhya, xvii 4
Sarvârthasiddha, ii 17, vii 1
Sâ*m*k*ri*ti, ix 60
Sârathi (pura), xv 98
Sârasvata, i 47
Su*g*âtâ, xvii 9
Sudar*s*ana, xv 92
Sunirmitâ*h*, the, xvi 111
Su*m*da, xi 32
Su*m*darânanda, xvii 27
Sumitra, vi 36.
Suvar*n*anish*th*îvin, viii 77.
Sûryaka, xiii 11
S*ri**m**g*aya (Sa*m**g*aya ?), vi 77
Sena*g*it, ix 20
Soma, iv 73.
Sautasomî, xvii 27
Saunu, Saunava (?), xvii. 28, 30
Svaya*m*bhû, ii 51, x 2, 19, xvii 30
Svastika, xvii 6

Himavat, ii 3; iv. 27, v 45, viii 36, ix 68
Himâdri, i 20, xvii 13

